# संस्कृत-विमर्शः

नवशृङ्खला

अङ्कः ४ वर्षः २०१०



राष्ट्रियसंस्कृतसंस्थानम्
मानितविश्वविद्यालयः
नवदेहली

प्रकाशकः
कुलसचिवः
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः) .
५६-५७, इन्स्टीट्यूशनल एरिया
जनकपुरी, नवदेहली-११००५८

e-mail : rsksrp@yahoo.com
website : www.sanskrit.nic.in



ISSN : 0975

संस्करणम् : २०१०

वार्षिकसदस्यताशुल्कम् – रू० १००-००
प्रत्यङ्कम्– रू. ५०-००

मुद्रकः
अमर प्रिंटिंग प्रेस, दिल्ली-११०००९
दूरभाषा- ९८७१६९९५६५
e-mail-amarprintingpress@gmail.com

# SAṂSKṚTA-VIMARŚAḤ

*New Series*

**Vol.-4** **Year 2010**



**Rashtriya Sanskrit Sansthan**

(Under Ministry of Human Resource Development, Govt. of India)

Deemed University

New Delhi

*Publisher*
Registrar
Rashtriya Sanskrit Sansthan
Deemed University
56-57, Institutional Area,
Janakpuri, New Delhi - 110 058

e-mail : rsksrp@yahoo.com
website : www.sanskrit.nic.in



ISSN : 0975

Edition - 2010

Annual Subscription : Rs. 100-00

Rs. 50.00 Per issue

Printed at :
Amar Printing Press, Delhi - 9
Ph., 9871699565, 9891709217
e-mail-amarprintingpress@gmail.com

## परामर्शदातृ-समितिः



---

## सम्पादक-मण्डलम्

## ADVISORY-BOARD



---

## EDITORIAL-BOARD

# विषयानुक्रमणिका

**विमर्शः—**

# शिशुपालवधमहाकाव्ये ज्योतिर्विज्ञानविचारः

के.बी. अर्चकः

**क्षेमेन्द्रः कविकण्ठाभरणे ज्योतिषशास्त्रज्ञावस्यावश्यकत्वं कवीनां प्रतिपादयति। तदनु लेखेऽस्मिन् माघस्य कवेः ज्योतिषशास्त्रज्ञानं तत्कृतेरुद्धरणानि प्रदर्श्य प्रकाश्यते।**

"अपारे काव्यसंसारे कविरेकः प्रजापतिः, यथास्मै रोचते विश्वं तथेदं परिवर्तते" (ध्वन्यालोक III. ४२) इति आनन्दवर्धनभणितिः अर्थवत्ता एव। सुकविः अचेतनानामपि चेतनवत् चेतनान् अचेतनवत् स्वतन्त्रतया काव्ये व्यवहारयति, काव्यप्रपञ्चं सृजति, नूतनब्रह्म भवति। इयं सृजनशक्तिः "कवेः अन्तर्गतभाव" इति भरतेनोक्तम्, एवं च कविप्रतिभा एवेति भामहेन अभिप्रेतम्।[१]

एतादृशसुकविनः अन्यतराणां शास्त्राणामपि सम्यक् ज्ञानमावश्यकं वर्तते। यथा राजा चक्रवर्तिपदप्राप्यर्थम् उत्तम–मध्यम–अधमजनमध्ये विवेकं मनसि विधायति, ब्राह्मणादि–वर्णानां तेषु तेषु वृत्तिषु अनिष्टसङ्करं परिहरति, तथैव श्रेष्ठकविः काव्यगतगुणान् मनसि निर्धार्य तद्दोषान् परिहृत्य उत्तमकाव्यं कर्तुं शक्नोति, अनेन च सः कविचक्रवर्ती भवितुं अर्हति। मार्गमिदमनुसृत्य व्यापकदृष्ट्या दण्डिः एवं कथयति

**नैसर्गी च प्रतिभा श्रुतं च बहु निर्मलम्।**
**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः।।**

(काव्यादर्शः I. १०३)

तथा च, लोकानुभवं वेदादिशास्त्रज्ञानं वृद्धसेवा–विमर्शात्मकप्रतिभादिरूपं प्रकीर्णं च कवेरावश्यकं भवन्ति इति विश्वतोमुखविचारः "लोको विद्याप्रकीर्णं च काव्याङ्गानि" (१.३१) इति काव्यालङ्कारसूत्रेण प्रकटीकृतः। एतदग्रे गत्वा, क्षेमेन्द्रः कवेः शास्त्रज्ञान–व्यापकत्वमधिकृत्य स्वीये कविकण्ठाभरणे ख्यापयति–

**रवीन्दुताराकलनं सर्वर्तुपरिभावनम्।**
**जनसङ्घाभिगमनं देशभाषोपजीवनम्।।** (II. २)

अत्र 'रवीन्दुताराकलनम्' इति पदं कवेः ज्योतिषशास्त्रज्ञानस्यावश्यकत्वं सूचयति।

न केवलमिदं कवेः पर्याप्तं, अपि तु तस्य न्यायमीमांसा व्याकरणादिशास्त्र-ज्ञानमावश्यकम्। सन्दर्भेऽस्मिन् क्षेमेन्द्रः पतिपादयति यत् तर्क-व्याकरण-भरत-चाणक्य-वात्स्यायन-भारत-रामायण-मोक्षोपाय-आत्मज्ञान-धातुवाद- रत्नपरीक्षावैद्यकज्योतिष-धनुर्वेद-गज-तुरगपुरुषलक्षण-द्यूत-इन्द्रजालप्रकीर्णेषु परिचयः कविसाम्राज्यव्यञ्जनः इति।[२]

परमत्र कविना अवधातव्यं यत् विविधशास्त्रज्ञानप्रभावेन स्वकाव्ये यथेच्छं तत्त्वच्छास्त्रविचारान् न व्यवहारयेत्। अंशमिमं लक्षीकृत्य अभिनवगुप्तेन निरूपितं यत्- "व्युत्पत्तिः प्रतिभोपयोगि समस्तवस्तु - पौर्वापर्यपरामर्शकौशलम्"। एतादृशकविचक्रवर्तिना माघेन स्वीये शिशुपालवधमहाकाव्ये नैकानां शास्त्रविषयाणां उल्लेखाः उपयोजिता सन्ति। यथा व्याकरण-शास्त्रं (II. ४७, ९५, ११२, XIV. ६६, XIX. ७५), धर्मशास्त्रं (IX. ९), सांख्यदर्शनं (I. ३३, XIV. १९), मन्त्रशास्त्रं (II. ८२), न्यायशास्त्रं (II. ९१), आयुर्वेदशास्त्रं (II. ५४, ८४, ९३, ९६), पुराणशास्त्रं (I. १५, ४९, ५० ; II. ३८, ३९, ४०, ६०; III. ६१; IV. २; V. ३१, ६६; VI. १७; VIII. ६४; IX. १४, ८०; XI. ३), नाट्यशास्त्रं (II. ४४, XIV. ४०), अर्थशास्त्रं (V. १०, ६०), गजशास्त्रं (V. ३६, ४७, ४९), संगीतशास्त्रं (I. १०; XI. १), इत्यादयः। तथैव माघकवेः राजनीतिज्ञानं पूर्णतया द्वितीयसर्गे परिचितं भवति। अत एव शास्त्रवैदग्ध्यं अमोघीकृतस्य कवेर्माघस्य नाम संस्कृतकाव्यसाहित्यनभोमण्डले विद्युदिव देदीप्यते। महाकाव्यलक्षणेक्षिते चन्द्रार्कोदयादि-वर्णनोत्तुङ्गतरङ्गान्विते प्रधानकथाप्रवाहे मज्जनानन्दभरभरिताः तस्य माघमहाकवेः ज्योतिर्विज्ञान-वैदुष्य-वैचित्र्यमपि साक्षीकुर्वन्ति। तथा च ज्योतिर्विज्ञानविचाराः यत्र यत्र यथायोग्य-स्वान्तरीभूताः सन्ति, तेषां समालोचनं ससन्दर्भमत्र कृतमस्ति।

शिशुपालवधमहाकाव्यस्य प्रथमसर्गे नारदः द्वारकामागत्य श्रीकृष्णं प्रति चेदिराजस्य औद्धत्यपूर्णस्य शिशुपालस्य संहारार्थं इन्द्रसन्देशं निवेदयति। एतस्मिन्नेव काले द्वितीयसर्गप्रारम्भे राजसूय-यागायोजितेन युधिष्टिरेण श्रीकृष्णः निमन्त्रितः भवति। अतः अनयोः देवकार्य-मित्रकार्ययोः कतरं स्वीकार्यमिति मानसिकद्वन्द्वमुपपाद्य, तन्निर्णयार्थं उद्धवबलरामाभ्यां सार्धं श्रीकृष्णः मन्त्रगृहमगच्छत्। गमनावसरे, तौ उद्धवबलरामाभ्यां कृष्णानुसरणं "गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभः श्रियम्" (II. २)[३] इति वर्णितम्। इदं च वर्णनं ज्योतिःशास्त्रोल्लेखेन उपोद्बलितमस्ति अमरकोशोक्तदिशा[४] अत्र गुरुकाव्यौ बृहस्पतिशुक्रयोः पर्यायवाचिनौ स्तः। सदसि

उद्धवबलरामाभ्यामनुसृतस्य श्रीकृष्णस्य शोभावैचित्र्यं उद्घोषयितुं माघेन नभोमण्डलमण्डितः गुरुशुक्रग्रहानुगतः चन्द्रः उपमानवाचकत्वेन उदाहृतः।

बृहज्जातकोक्तदिशा[१] स्वक्षेत्रस्थस्य चन्द्रस्य अपेक्षया यदा गुरुशुक्रौ समस्थानौ भवतः तदा गुरुशुक्रो सममित्रे अपि तयोस्तेजः ह्रासत्वं भजति। तथैव एकस्मिन्नेव मन्त्रगृहे स्थिताभ्यां उद्धवबलरामभ्यां तेजः चद्रिकास्मितस्य श्रीकृष्णस्य पुरतः कुण्ठितमभूत्, एवं च कृष्णवचनमेव अनुसरणीयं भवतीति भावः।

मन्त्रगृहे मन्त्रालोचनसमये 'शिशुपालबधाय पराक्रममवलम्ब्य युद्धं प्रवर्तयितव्यमि'ति बलरामेन गदितम्। "अग्नेः शेषं, ऋणात् शेषं, शत्रोः शेषं न शेषयेत्" इति न्यायेन क्षुद्रोऽयं शिशुपालः एकाकी सन् नः किं करिष्यतीति न कदापि उपेक्षणीयः, परं एकोऽपि शत्रुः शिशुपालः उच्छेत्तव्यः इति बलरामस्य अभिप्रायः सन्दर्भेऽस्मिन् पुराणप्रसिद्धं राहुणा चन्द्रग्रसनं उल्लिखितं यथा–

**ध्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखम्।**
**पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम्।।** (II. १८)

अत्रोक्तप्रकारेण सिंहिकापुत्रः राहुः एकोऽपि देवतानामग्र एव चन्द्रमसं ग्रसते। एतमेव चन्द्रग्रसनविषयं द्वितीयसर्गे एकोनपञ्चाशत्तमे श्लोके पञ्चदशसर्गे श्लोके च सुन्दरं व्याहृतम्। तथा चायं श्लोकः

**"स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि"।**
**निदर्शनमसाराणां लघुर्बहुतृणं नरः।।** (II. ५०)

अत्र बलरामोक्तरीत्या, यथा मन्देनापि वायुना तृणं स्वयमेव प्रह्वीभवति, तथैव निष्पौरुषपुरुषः अल्पीयसा रिपुणा लघुक्लेशेन तृणकल्पो भवति। एवं च रविराह्वोः चन्द्रराह्वोश्च योगयोर्मध्ये द्वितीयस्यैव योगः तीक्ष्णतर इति माघेन सूचितः यथा–

**तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत्।**
**हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्।। ( II. ४९ )**

अत्र सूचितो विषयः एवं वर्तते, यदा रविराह्वोः योगः भवति तदा रवेः राहुः अल्पक्लेशकरः भवति, परं चन्द्रस्य अचिरेणैव कालेन बहुक्लेशकरः भवति। विषयस्यास्य स्पष्टीकरणं बिम्बात्मकेन ज्योतिःशास्त्रेण क्रियते यत् यस्य कस्यापि जातके चन्द्रः स्वस्थाने कर्कटके स्थितोऽपि राहुदुष्ट्याक्रुष्टो भूत्वा यथोचितफलदाने निर्बलो भवति, परं तादृशी निकृष्टावस्था रवेर्न भवति इति जातकमालायां स्पष्टं वर्तते।

एवं च पक्षकालमध्ये अष्टमी-चतुर्दशी-पूर्णिमा-प्रतिपत्तिथयश्च शुभं ज्ञापयन्ति इति तिथिनिर्णये प्रमाणितम्। अयमंशः पार्वणशब्दप्रयोगेन ध्वनितः माघेन यथा-

**जगत्पवित्रैरपि तं न पादैः स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः।**
**यतो बृहत्पार्वणचन्द्रचारु तस्यातपत्रं बिभराम्बभूवे।।** (III. २)

पूर्वोक्तप्रकारेण मित्रकार्य-देवकार्ययोः कः स्वीकारार्हः इति द्वन्द्वे उत्पन्ने सति कार्यद्वयं हस्तिनापुरगगनेन सम्भवति इति राजनीतिनिपुणस्य उद्धवमन्त्रिणः वचनानुसारं निर्णयं कृत्वा श्रीकृष्णः इन्द्रप्रस्थं प्रतस्थे। सन्दर्भेऽस्मिन् उपरितने श्लोके उक्तं यत्, कृष्णगमनसमये प्रपञ्चपूज्यं श्रीकृष्णं अर्कः स्वकिरणैः स्प्रष्टुं नार्हतीति।

तथा च इन्द्रप्रस्थप्रस्थानकाले 'पुष्य' नामकं माङ्गलिकरथमधिरोहतः श्रीकृष्णस्य शिशुपालवध-रूपकार्यसिद्धिर्भविष्यतीति सूचयता माघेन पठित :-

**रराज सम्पादकमिष्टसिद्धेः सर्वासु दिक्ष्वप्रतिषिद्धमार्गम्।**
**महारथः पुष्यरथं रथाङ्गी क्षिप्रं क्षपनाथ इवाधिरूढः।। (III. २२)**

अत्र 'पुष्य' इति शब्दप्रयोगेन पुष्यनक्षत्रं योजितम् भवति। बृहज्यातकोक्तरीत्या पुष्यनक्षत्रं सर्वार्थसाधकं वर्तते। यथोक्तं 'पुष्यो हस्तो मैत्रमप्याश्विनं च चत्वार्याहुः सर्वदिक् द्वारकाणि' इति। अपि च पुष्यनक्षत्रस्थितः चन्द्रः राजति काले क्रियमाणं कर्म सत्फलमाहवति, कर्मकर्तुः यशः सर्वासु दिक्षु प्रसरति इति नक्षत्रचूडामणौ व्याख्यातम्।

अनन्तरं नवमसर्गे वर्णितं यत् द्वारकानगरप्रस्थितः श्रीकृष्णः चतुरङ्गसङ्गो भूत्वा रैवतकपर्वतमासादितवान्। तत्र च श्लोकः सन्ध्यासमयं उपवर्णयति-

**प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।**
**अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि।। (IX. ६)**

दिवसावसानसमये सूर्यस्तावत् किरणसहस्रयुक्तोऽपि तेषां स्वकिरणानाम् अवष्टम्भनाय असमर्थो भवति, अस्तङ्गतो भवति। तदनन्तरं हिमांशु गगनाम्बरे उदयमेति। अतः सूर्यस्य कृते चन्द्रः प्रतिकूलः भवतीति सूचितम्। अत्र ज्योतिः-शास्त्रविचारः एवं वर्तते - चन्द्रः यथा यस्य पृष्ठतः (प्रतिकूलः) भवति, तदा सः महत्साधनसम्पत्तियुक्तोऽपि अनिष्टं भजति यथोक्तं जातकपारिजाते - " सम्मुखं ह्यर्थलाभाय दक्षिणे सुखसम्पदः। पृष्ठतो मरणं चैव वामे चन्द्रे धनक्षयः। प्रसङ्गान्तरे एकादशसर्गस्य श्लोकः ध्रुवनक्षत्रस्य आकृतिं कथयति-

**स्फुटतरमुपरिष्टादल्पमूर्तेर्ध्रुवस्य**
**स्फुरति सुरमुनीनां मण्डलं व्यस्तमेतत्।**
**शकटमिव महीयः शैशवे शार्ङ्गपाणे-**
**श्चपलचरणकाब्जप्रेरणोत्तुङ्गिताग्र्यम्।। (XI. ३)**

ध्रुवमण्डलं महत्तरं शकटमिव शकटाकारं शकटासुरशरीरमिव स्फुरति दीप्यत इति वर्णितमत्र। पृथिवीतः दूरे अवस्थानात् अस्य नक्षत्रस्य आकारः प्रतीयते। अस्य नक्षत्रस्य सन्दर्भः धर्मशास्त्रग्रन्थेषु स्मृतिग्रन्थेषु च श्रूयते। एवमेव धुरधुरायोगरय विचारः माघेन समीक्षितः अस्ति।

**पवनात्मजेन्द्रसुतमध्यवर्तिना नितरामरोचि रुचिरेण चक्रिणा।**
**दधतेन योगमुभयग्रहान्तरस्थितिकारितं धुरधुराख्यमिन्दुना।।**
**(XIII. २२)**

बृहज्जातकोक्तरीत्या द्वितीयस्थाने गतेन द्वादशस्थानगतेन च चन्द्रेण सह कुज-बुध-गुरु-शुक्र-शनिग्रहेषु अन्यतरताराग्रहः विद्यते चेत् धुरधुरायोगः सम्भवति।[६] धुरधुरायोगस्य कारकाणां ग्रहभेदपञ्चकेन तेषां स्थानाधिपस्थितिभेदेन च अयं योगः अशीत्युत्तरशतभेदे भिन्नः वर्तते। अयं योगः कार्यसिद्धेः निदानमिति प्रमाणितम्।[७]

अपि च, त्रयोदशसर्गे श्रीकृष्णः युधिष्ठिरश्च तेजःपुञ्जेन समुल्लसन्त्यौ सभापुरतः रथादवतीर्णौ इति वर्णनसन्दर्भे माघः कथयति-

**अभितः सदोऽथ हरिपाण्डवौ रथादमलांशुमण्डलसमुल्लसत्तनू।**
**अवतेरतुर्नयननन्दनौ नभः शशिभार्गवावुदयपर्वतादिव।।**
**(XIII. ६१)**

अत्र "शशिभार्गवावुदाय ......." इत्यादिवचनेन चन्द्रशुक्रयोः युगपत् समस्थाने कार्यसिद्धिर्भवतीति कविना उक्तम्। अस्मिन् विषये धुण्डिराजस्य जातकाभरणमेव प्रमाणम्।

तथा च पञ्चदशसर्गे अष्टचत्त्वारिंशत्तमे श्लोके "सकीलमिव सूर्यमण्डलम् ...." इत्यादिवचनेन ज्योतिःशास्त्रविषयः ज्ञापितः भवति यत्, सूर्याचन्द्रमसौ परितः यदि नाम समुज्ज्वलतारकामण्डलं अवतिष्ठते तर्हि मनुष्याणां अमङ्गलं नूनं भवेत्।

एवं सेनानिवेशेन इन्द्रप्रस्थभूमिः उद्धृतधूलिधूसरितो समभवदिति वर्णनसमये माघः कथयति-

**यियासितामथ मधुभिद्विवस्वता जनो जरन्महिषविषणधूसराम्।**
**पुरः पतत्पतबलरेणु – नालिनीमलक्षयद्दिशमभिधूमितामिव।।**
**( XVII. ४१ )**

अत्र "अभिधूमितामिव" इति सूर्यगमनवैचित्र्यं व्यञ्जितं करोति। "अङ्गारिणी दिग् रविविप्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता। प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशस्ताः शुभदाश्च ताः स्युः" इति जातकाभरणग्रन्थे विशदीकृतम्।।

एवमेव अन्येषु केषुचित् श्लोकेषु माघः ज्योतिःशास्त्रविचारान् आविष्कृत्य शिशुपालवधमहाकाव्यस्य वैचित्र्यं व्यञ्जितवानिति स्पष्टं भवति।

---

१. "काव्यं तु जायते कस्यचित् प्रतिभावतः प्रतिभावतः।।" काव्यलङ्कार, I. ५
२. कविकण्ठाभरणम्, V. २
३. सार्धमुद्धवसीरिभ्यामथासावासदत्सदः।
गुरुकाव्यानुगां बिभ्रञ्चान्द्रीमभिनभः श्रियम्।। शिशुपालवधम्, II. २
४. "बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः
शुक्रो दैत्यगुरुः काव्यो उशना भार्गवः कविः", अमरसिंहः, अमरकोशः I. ५
५. वराहमिहिरः, बृहज्जातकम्, द्वितीयप्रकरणम्, १५, p. ९६
६. हित्वार्कं सुनाफाऽनफाधुरधुराः स्वान्त्योभयस्थैः ग्रहैः शीतांशोः। बृहज्जातकम्, XIII. ३
७. उत्पन्नभोगसुखं भुग्धनवाहनाढ्यरतागान्वितो धुरधुराप्रभवरसुभृत्यः।। बृहज्जातकम्, XII. ६

# अथ पङ्क्तिकपदार्थलक्षणम्

पियाली पलित

अत्र पङ्क्तिकपदार्थो विचार्यते। स च प्रांधान्येन त्रिविधः-कालिक-देशिक-बौद्धिकभेदेन। तत्र एक एव पदार्थो नानासमवायप्रतियोगी भूत्वा महज्जगज्जालं रचयतीति नव्यनैयायिकानां मतं, यच्च प्राचीनैः नोल्लिखितम्। कणादकल्पितमेव वस्तुनिचयम् अनुचिन्त-यद्भिः नव्यैः आकारतो धर्मधर्मिभावमवलम्ब्य उपस्थाप्यते एतत् पङ्क्तिकपदार्थलक्षणमिति आधुनिकशैल्याऽत्र निबन्धे निरूप्यते।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।
पङ्क्तिकपदार्थलक्षणं क्रियते धर्मार्थिभिः॥

अथ हृत्पदं मनःपरम्। जन्यत्वं सप्तम्यर्थः। अन्वयश्चास्य निधाने। निधानं ज्ञानविशेषः। विश्वेशम् इति द्वितीयार्थो विषयत्वम्। तथा च विश्वेशविषयक-मनोजन्य-ज्ञानविशेषोत्तरकालीना या कृतिरिति केचित्। तन्न। ज्ञानमात्रस्य मनोजन्यत्वेन मनोजन्यत्वार्थस्य हृदीत्यस्याव्यावर्तकतापत्तेः। किन्तु हृत्पदं हृदयरूपशरीरावयवपरम्। निधानं धात्वर्थः। तच्चावस्थापनमवस्थिततत्वारोपणम्। तथा च अवस्थिततत्वप्रकारक-आहार्यज्ञानोत्तरकालीना या कृतिः इत्यन्वयबोधः। हृदीत्यत्र सप्तम्यर्थो निरूपितत्वम्। तस्यावस्थिततत्वे अन्वयः। विश्वेशम् इत्यत्र द्वितीयार्थो विशेष्यत्वम्। तथा च विश्वेशविशेष्यक-हृदयनिरूपितवृत्तित्वप्रकारक-आहार्यज्ञानोत्तरकालीना या कृतिः इत्यन्वयः। अथ गुर्वादिस्मरणानन्तरम् पङ्क्तिकपदार्थलक्षणं अभिनवनव्यवैशेषिकतत्त्वं विव्रियते अस्मदाचार्येण नवज्योतिसिंहेन वैश्वामित्रेण विज्ञाननिधिना।

अथ नव्य-वैशेषिकैः पदार्थधर्मपरिस्फुटनार्थं प्रथमतः आधुनिकज्यामितिग्राह्यं शेप् फर्म् (Form), पयेन्ट् (Point) इत्यादिविषयकमालोचनं क्रियते। तत्र यदा कश्चित् गोलाकारः समतलवृत्तिः भवति तदा तयोः संयोगः बिन्दुमात्रप्रदेशं व्याप्नोति। तत्संयुक्तप्रदेशनिष्ठवृत्तितानिरूपकविन्दुः स्वयम् अप्रदेशवृत्तिः पयेन्ट् इति पदेन

उल्लिख्यते। संयोगस्तु प्रदेशवृत्तिरेव। फर्म् इति पदेन परिपूर्णाकारः संस्थानविशेषः कश्चिदुपलभ्यते यस्तु **स्वरूपतः बौद्धिक बुद्धिनिष्ठः** न प्राचीनसम्मतभावपदार्थेषु अन्तर्भावितः। शेप् इति पदेन **पदार्थगत-आकारविशेषः बुद्धौ भासमानः** उल्लिख्यते। सर्वमेतत् केवलं गणितसाधनम् न वेति आह न। यथार्थव्यवहारस्थलेऽपि एतेषां सम्यक् प्रयोजकत्वात्। तद्यथा तन्त्रयुक्तौ अनुमितौ वा यत् युक्तिसङ्ग्रहादि क्रियते तेषाम् सविषयकत्वात् विशेष्यविशेषणभाववत्तया विशिष्टसम्बन्धनिरूपणत्वात् दार्ष्टान्तिकस्थलीयत्वाच्च। सर्वमेतत् **आइडियल्** (Ideal) तथा **बुद्धिनिरूपित-वृत्तित्वप्रकारक-आहार्यज्ञानविषयमात्रमिति** मतम्। वस्तुगत्या हि सर्वे पदार्थाः एतेषां बुद्धिनिष्ठानाम् अनुकाराः तत्त्वानि इति प्रतीयन्ते। यथार्थानुकारयोः स्वरूपतः भेदवत्त्वेऽपि तदाकारोपहितत्वात् भेदग्रहणं दुष्करमेव। गोलक-गोलाकारवत् चक्र-चक्राकारवत् रेखा-रेखाकारवद्वा। एवं सति कथमस्य परिज्ञानं भवति - आकारात् आकारविशिष्टस्य आकारविशिष्टात् आकारस्य वा। तदा ब्रूमः प्रायिकमेतत् वचनम्। प्रकृतिवशात् ईश्वरज्ञानविषयतावशात् बीजाङ्कुरादिवदनादिसृष्टिवैचित्र्यदर्शनात् पौरुषेयव्यवहारप्रवृत्तिवशात् च। **तथा हि ययोः कयोश्चित् बौद्धिकपदार्थयोः संबन्धः बाह्यपदार्थसंसर्गं विनाऽपि भवितुमर्हति। यथा गोल-समतलयोः जगत्-सृष्ट्योर्वा। न चैतत् स्वाप्नविषयवत् मिथ्या शशविषाणादिवत् वा तुच्छम्। तुच्छविषयाणां संसर्गात्यन्ताभावात् स्वाप्नादीनां मनोविजृम्भणमात्रत्वाच्च।** एतेषां बौद्धिकपदार्थानां वैशेषिकसम्मतषट्पदार्थेषु अन्तर्भावः इष्यते न वा। एते खलु बुद्धिविषयाः आत्मधर्माः इति मन्यते। बुद्धेः आत्मधर्मत्वम् सविषयकत्वं च तैः अंगीकृतमेव। यदा किञ्चिद् गोलाकारद्रव्यम् अस्मद्बुद्धिषु वर्तते तदा तद्द्रव्यगत-परिमाणादिधर्मा अपि बुद्धौ भासन्ते। अतस्तेषां गोलाकाराणां परिमाणादिगुणपदार्थे अन्तर्भावः कथं न स्यात्। उच्यते न स्यात्। आकारस्य द्रव्यगतपरिमाणप्रयोजकत्वात्। आकारभाव्यं हि परिमाणम्। उक्तं च प्रशस्तपादभाष्ये - परिमाणं मानव्यवहारकारणम्। तच्चतुर्विधम् - अणु महद् दीर्घम् ह्रस्वं वेति। मानं मानव्यवहारश्च आकारम् आश्रित्यैव भासमानं भवति। भवतु तावत्। सर्वमेतत् अपेक्षाबुद्धिविषयं न वा संख्यादिवत्। नैतद् वाच्यम्। संख्यापरिमाणादीनाम् अपेक्षाबुद्धिविषयत्वं एकैकबाह्यविषयनिरूपितं भवति। परन्तु अपेक्षाबुद्धिः परत्वापरत्वसंख्यादीन् विषयीकुर्वन्नेव प्रवर्तते। न तस्याः स्वातन्त्र्यमस्ति वा। आकारादीनां तु स्वविषय-कानुभवकाले यद्यद्विषये अनुभवः जायते तत्तद्विषये तेषाम् आरोपणं परिलक्ष्यते। धर्मसारूप्यात् बाह्येऽर्थे तदनुकाराः अनुभूयन्ते इति विशेषः। तथा हि – बुद्धिगत-दार्ष्टान्तिकाः वस्तुतः मानसविनिर्माणम् प्राकृतिकनियमानुसारि-कल्पितविषयाः हृत्कल्पितपरमेश्वरवत्। तद्विग्रहास्तु प्रत्यक्षपूजार्चादिव्यवहारविषयाः आलम्बनप्रतीति-विषयाः वेति लभ्यन्ते। प्राचीनैः आकारादयः गुणपदार्थेषु न प्रकीर्तिताः। गुणाः

द्रव्यवृत्तयः आकारास्तु द्रव्यविशेष-आश्रितत्वेऽपि तदधिकविस्तारवृत्तयः सन्ति। ननु आकाराः अवयवसंस्थानविशेषाः अवयवातिरिक्तावयविवत् इति कथं न उच्येत। न तथा। संस्थानविशेषाणाम् संयोगमात्रत्वात्। आकारस्तु संयोगातिरिक्तपदार्थविशेषः। स च द्रव्यनिष्ठसंयोगभाव्यत्वे सति संयोगातिरिक्त-अभिनव-पदार्थाविशेषः। एवमपि वक्तुं शक्यते - परिपूर्णाकारादयः ज्ञानाकाराः प्राचीनवैशेषिकसम्मतचतुर्विंशति-गुणातिरिक्ताः उपाधिविशेषाः स्युः। यद्वा अन्तिमसंयोगपर्यन्तं मूर्तानां समाप्ति-अवच्छेदवृत्ति-संयोगपर्यन्तमात्रवृत्तिः विभाजक-उपाधिविशेषः स्यात्। आधार-आधेयभावाश्च आकारादिवत् औपाधिकाः बौद्धिकपदार्थाः एव। सर्वे एते निरूप्यनिरूपकभाववन्तः आहार्यज्ञानविषयाः उपाधयः वृत्त्यनियामकसम्बन्धविशिष्टाश्च भवन्ति। वस्तुनि तेषां अयुतसंबन्धनियमितवृत्तित्वं नास्त्येव। वस्तुतः स्वगतं धर्मम् अपरे आरोपयति उपादधाति वा इति उपाधिलक्षणम्। अस्ति च उपाधेः अपरः विशेषः यदेषः आरोपितयोः वस्तुनोः सम्बन्धं निरूप्यनिरूपकभाववत्त्वं वा प्रकाशयति। यद्वा विभाजकत्वे सत्यपि औपाधिकसाधर्म्यवैधर्म्यनिरूपणेन पदार्थकोटिसंग्राहकः भवति। यथा- नित्यत्वे सति अन्यद्रव्यानारब्धकत्वे सति अनाश्रिताश्रयत्वम् अन्त्यद्रव्यत्वम् यथा आकाश- काल-दिक्-मनांसि। संयोगविभागकारणतावच्छेदकत्वं द्रव्यत्वम् इति च। तत्र पदार्थविभाजक-उपाधयः पदार्थविभागे निमित्तीभूत्वा लक्षणप्रवर्तकाः भवन्त्येव इत्येतेषां महदाशयः। यथा- द्रव्यत्ववत्त्वमिति द्रव्याणां सामान्यलक्षणे स्थितेऽपि आत्माश्रयदोषभयात् क्रियागुणसमवायिकारणत्वं द्रव्यत्वमिति विशिष्टलक्षणं पदार्थविभाजक-उपाधिं द्वारीकृत्य तत्प्रयुक्ताः मनुष्यत्वमात्रविशिष्टेषु स्त्रीत्व-पुंस्त्व-ब्राह्मण-क्षत्रियादि-उपाधि-प्रवर्तिताः विभागाः प्रामाणिका एव। अथवा एवमपि वक्तुं शक्यते - कार्य।। कारण-ग्राह्य।। ग्राहक - आधार।। आधेयादिभाव-प्रयोजक-संयोगादिसंबन्धम् आकारयति इति आकारः शेप्। अथ मूर्तामूर्तयोः आकारभेदः अस्ति न वा। अवश्यमस्ति। यथा अमूर्तत्वे सत्यपि यज्ज्ञानाकारः प्रतीयते स परिभाषायां प्रकार इति व्यवह्रियते। तेन च कश्चित् ज्ञानीय-विशेष्य-विशेषण-भावः प्रतिष्ठाप्यते। एवं सर्वव्यवहारमूलः धर्म-धर्मि-भावः उपाधिवशात् विशिष्टभावे पर्यवस्यते। उपाधित्वं स्वयं तु अनाश्रित-आश्रयत्वमिति बोद्धव्यम्। प्राचीनवैशेषिकमते आकारादीनां बुद्ध्यनतिरिक्तसत्ताकत्वात् न पृथग्रूपेण भावाभावेषु उल्लिखितम्। प्राचीनकृतभावाभावपदार्थानां लक्षणेषु आत्माश्रयदोषवशात् लक्ष्य-लक्षणसंबन्ध-स्वरूपविचारमार्गेण अभिनवनिर्दोषलक्षणम् निरूपणीयम् इति नव्यानाम् अभिमतम्। तत्र दिगाकाशानुपाधिककालोपहितानुपूर्वीकत्वमिति अनुभवलक्षणम्। सानु-पूर्वीकत्वमित्यनेन पूर्वापरीभावमाचष्टे। अयं पूर्वापरीभावः ज्ञानप्रकारीभूतसंस्थानविशेषः वाग्व्यवहारकाले पदे वर्णानां समूहं रचयति। स्वरान्तं हि अक्षरम्। स्वर-व्यञ्जनयोः सानुपूर्वीकत्वं विना पदसार्थक्यं न सम्भवति। वर्णानां पदानां वाक्यानां स्वराणां च

सानुपूर्वीकत्वसंरक्षणेनैव प्रमाण- शब्दव्यवहारः जायते लौकिकेषु वैदिकेषु च। अथ केयम् आनुपूर्वी। उक्तं च तद्वर्णोत्तरं तद्वर्णोच्चारणम्। वर्णानामानुपूर्व्येण संनिवेशः। पा। पस्पशा। भा। इति वा। स च कालिकवृत्तिविशेषः पूर्वोत्तरभावविशिष्टः आनुपूर्व्य-आनुपूर्वी-भावः प्रातिशाख्येषु सविस्तारमुपपद्यते। सानुपूर्वीकत्वमित्यनेन पूर्वापरीभावमाचष्टे। अथ तत्र क्रमः फर्म् इत्यनयोः किं पार्थक्यम्। अत्र ब्रुमः-आनुपूर्व्य-आनुपूर्व्यी-भावः रेखाकल्पः विस्तारविशेषः फर्म्। क्रमस्तु सानुपूर्वीकानां भावपदार्थानां संस्थानम्। अस्मन्मते आनुपूर्वी आधाराधेय- भावापेतः कालघटित-धर्मविशेषः। अथ कालस्य अखण्डत्वेऽपि विभुत्वात् तथा सर्वमूर्तद्रव्यसंयोगप्रतियोगित्वात् तस्मिन् कथञ्चित् क्रियानुयोगित्वमपि कल्पितव्यम् तत्संयुक्तद्रव्याणां क्रियासमवायित्वात् - येन कालश्चलति तथा भूत-भविष्यत्-वर्तमानादि-कालव्यवहारा अपि स्वीक्रियन्ते। एवं सति चलनात्मकक्रियासंयोगित्वात् काले विभागे स्वीकृते अनवस्था दुष्परिहरा विभागज-विभागस्य आनन्त्यात्। एवं पाश्चात्यमते महामति-जेनो-कृतः विप्रतिपत्तिविशेषः यत् संयोगजन्यक्रियावत्त्वे सति विभागज-विभाग-सत्त्वात् कालस्य भूत-भविष्य-वर्तमानवृत्ति-परिपूर्णाकारः कदापि न सम्भवः अनवस्था च अवश्यंभाविनी। अत एव कालस्थितविषयानां व्यवहारसिद्ध्यर्थं संयोगविभागाद्यतिरिक्तः कश्चिद् वस्तुविशेषः पूर्वापरीभावप्रयोजकः स्वीकार्यः। स हि वस्तुविशेषः नव्यैः पयेन्ट् इति पदेन समाख्यातः। इन्दो-युरोपीयभाषावर्गे पुङ्क्त-धातुनिष्पन्नम् इदं पदं देवभाषायाम् पङ्क्ति पञ्च प्रपञ्च इत्यादिरूपेण प्राप्यतें। एषां सर्वेषां वाच्यार्थे रेखा रेखिता विस्तारः इत्यादयः गृह्यन्ते। तथा हि मुंख्यतः कालिक-पङ्क्तिः देशिक-पङ्क्तिः बौद्धिक-पङ्क्तिश्च स्वीकृताः। सानुपूर्वीकत्वं हि पङ्क्तिमत्त्वम्। तथा हि देशिक-पङ्क्तिः अनुभूतपदार्थसन्निविष्टा अनुभव-पदार्थसंबन्धानां प्रयोजिका। कालिक-पङ्क्तिः आत्मनिष्ठानुभूतगुणानां अनुभवानां च क्रमं विस्पष्टयति। बौद्धिक-पङ्क्तिस्तु केवलम् अनुभूतपदार्थानां तेषां संबन्धानां च आधारः भवति। आत्मनः अननुभूतगुणाः यथा विभुत्वं सर्वमूर्तसंयोगित्वं वा नित्यत्वम् उत्पादविनाशराहित्यम् अनुपादानत्वम् अनाश्रित-आश्रयत्वं वेति स्वाधिकरणव्याप्यवृत्तिमत्वात् अपङ्क्तिका इति परिगणिताः। अपि च उच्यते क्रियोपाधिकः कालः। सा च क्रिया क्षणमात्रमाश्रित्य व्यपदिश्यते। क्षणं हि कालविशेषम् अविनाशि। तथा सति तत्क्षणवृत्तिविषयाणां सत्ताऽपि अविनाशिनी भवितुमर्हति। प्रागभावाव्यवहितोत्तरक्षणवृत्तित्वे सति ध्वंसाभावाव्यवहितपूर्वक्षणवृत्तिविशिष्ट-अनुभवविषयाणां तत्क्षणमात्रवृत्तित्वात् तेषाम् अविनाशित्वं कल्पनीयम्। तत्क्षणस्य युगपत्प्रागभावध्वंसाभावप्रतियोगित्वात् अविनाशित्वं तन्निष्ठविषयाणं च। कालगता स्वाभाविकी क्रिया च स्पन्दात्मिका। कालस्पन्दात् जायते क्षणम्। अखण्डे काले क्षणमिति उपाधिग्रहणादेव तस्य सर्वव्यवहारहेतुत्वं संभवति। कालगतयावद्धर्माणामाश्रयत्वे

सत्यपि क्षणम् स्वयं गतिहीनं क्रमिकाक्रमिकोभयप्रकारकं भवति। क्षणगतक्रमिकत्वं तत्तत्क्षणवृत्तिज्ञानविषयैः निश्चीयते। अथवा कालानुक्रमज्ञानविषयवत्त्वात् क्षणं क्रमिकमिति वक्तुं शक्यते। निरुपाधिके काले स्वरूपसंबन्धावच्छिन्नत्वे सति तस्यैव अक्रमिकत्वमिति क्षणभङ्गवादः निरस्तः। तच्च क्षणं पुनः सावधिकं निरवधिकं च भवति। युगपत्प्रागभाव-ध्वंसाभावप्रतियोगित्वे सति तत्क्षणवृत्तिज्ञानविषयवत्त्वात् क्षणं सावधिकम् अक्रमिकं च भवति। स्वरूपतः निरुपाधिककालविशेषः इति निरवधिकं क्रमिकमित्यपि ग्राह्यम्। तथा हि आत्मगुणे ज्ञाने क्षणिकत्वमुपाधिः। तच्च औपाधिकं क्षणं विशेषणसापेक्षतया कालोपाधिकत्वात् सावधिकं निरवधिकं चेति अविरुद्धतया समं ग्राह्यम्। तत्क्षणवृत्तिज्ञानस्य व्याप्यवृत्तितया विभौ आत्मनि सर्वत्र संबन्धसत्त्वेऽपि शरीरावच्छेदे अणुपरिमाणमनःसंयुक्त-आत्मप्रदेशमात्रप्रकाशः सर्वानुभवसिद्धः। परन्तु ज्ञाने क्रमसत्त्वात् तज्ज्ञानाधारं क्षणं क्रमविशिष्टमिति आहार्यम्। तथा हि-दिगाकाश-अनौपाधिक-कालोपहित-सानुपूर्वीकत्वम् अनुभवत्वमिति अनुभवलक्षणम्। अनुभवश्च आत्मविशेष-गुणम्। स च अनुभवः स्वात्यन्ताभावाप्रतियोगित्वे सति आत्मनि व्याप्यवृत्तिः इति सिद्धान्तः। विषयभेदात् आत्मनि भूत-अनुभूत-अननुभूत-गुणत्रयविशिष्टत्वं जायते। अननुभूतगुणास्तु स्मृति-संस्कार-अदृष्ट-पाप-पुण्य-धर्माधर्मादयः अक्रमिकाः अज्ञातसत्ताकाश्च भवन्ति। ज्ञान-सुख-दुःख-इच्छा-द्वेष-सङ्कल्पादयः ज्ञातसत्ताकाः क्रमिकाः पङ्क्तिविशिष्टाः वा भवन्ति। सर्वेषां च गुणानां जन्यत्वात् भूतत्वम् इति साधर्म्यं तेषु वर्तते। अनुभूतत्वाननुभूतत्वं हि विभाजक-उपाधिमात्रम्। ततः ज्ञानाधिकरणमात्मा इत्येतन्मात्रलक्षणम्। न उपयोगि। पङ्क्तिविशिष्टानां क्रमिकानां वा यत् विरामोऽवसानं वा तेषां क्रमप्रयोजकं पयेन्ट् इत्यनेनाभिधीयते तच्च अत्र उल्लिख्यमानं भवितुमर्हति। यथा- आपातविच्छिन्नयोः प्राणापानयोः मध्ये द्वौ विरामौ वर्तेते यत्र प्राणापानभिन्नौ कश्चित् विभाजकौ अवश्यं स्वीकर्तव्यौ। एवं कालिकपङ्क्तिविशिष्टानां ज्ञानानामन्तरे च।। तथा हि वस्तुमात्रं विन्दुः अथवा पयेन्ट् इति मूलतत्त्वद्वयमेव स्वीकर्तव्यम्। अस्ति च तयोः विशेषः यत् वस्तु विन्दु च वस्तु-अनधिकरणम् भवतीति। एतच्च अवधारणीयं यत् वस्तुमात्रत्वेनैव पदार्थत्वं न सिध्यति। तदेव वस्तुमात्रम् आङ्गल-भाषायाम् एन्टिटि (Entity) इति पदेन बोद्धव्यम्। पयेन्ट् विन्दु इत्यनेन च स्वरूपतः वस्तूनां विभाजकधर्माः एव बोद्धव्यम्। नैते विभाजकधर्माः द्रव्यादिवत् भावपदार्थाः न तदभावाः न वा तुच्छाः धर्ममात्रत्वात्। तथा हि वस्तु-विन्दु-समुच्चयं वस्तु-विभाजक-समुच्चयं वा जगत् इति आपद्यते। अयम् विन्दुविभाजकः वस्तूनां संबन्धप्रयोजकः। स हि संबन्धप्रयोजकः द्वयोः वस्तुनोः द्वन्द्वभावनियामकः। द्वन्द्वभावस्तु स्वरूपतः बौद्धिकद्वन्द्वभावः वस्तुषु औपचारिकः। परन्तु यावद्विश्वसापेक्षत्वात् द्वन्द्वभावप्रवर्तनायां वस्तूनां नास्ति कथमपि स्वातन्त्र्यमिति हि विशेषः। अथवा एतद्द्वन्द्वभावे सर्वं जगत् उपकारकमिति कल्पनीयम्। यथा

हस्त-पुस्तक-संयोगः। हस्त-पुस्तक-संयोग इति त्रयाणां पदार्थानां मध्ये सम्बन्धानुकूल्यविशेषसत्त्वे तदतिरिक्तानां विश्वस्य उपकारकत्वम् अवश्यमङ्गीकर्तव्यम्। संबन्धस्तु त्रिविधः स्वरूप-संयोग-समवायभेदात् धर्म-धर्मि-भावस्य संबन्धानुकूल्य-विशेषनिरूपितत्वाच्च। तत्र स्व-अधीनमात्रसंबन्धत्वं स्वरूपत्वम्। स्वभिन्न-अपर-सम्बन्ध-संबन्धि-भावात्यन्ताभाववत्त्वं वा। सम्बन्धान्तरेण असम्बन्धत्वे सति संबन्धत्वं स्वरूपत्वं पदार्थान्तर-अनपेक्षत्वे सति स्व-अधीनमात्रसम्बन्धत्वं वा। अस्ति स्वरूपतुल्यः द्वन्द्वभावग्राहयिता धर्मविशेषः। तच्च कन्टिग्युटि (Contiguity) इति आङ्ग्ल-पारिभाषिकशब्दविशेषेण उल्लिख्यते। तद्धर्मविशेषः कश्चित् बौद्धिकसम्बद्धत्वं बुद्धिमात्रग्राह्यसंबद्धत्वं वा बोधयति। अस्माभिः तु सर्वमेतत् पारिभाषिकशब्दनियततत्त्व-प्रकाशार्थं चित्रभाषा आश्रयित्वतव्या इति मतम्। अतः यथास्थानम् एतेषां चित्ररूपं प्रतिष्ठाप्यते।




तथा च सर्वमेतत् वैशेषिकनये पर्यवस्यते। कणादेन महर्षिणा तथैव दर्शनात् सूत्रितत्वाच्च नास्त्यत्र कश्चित् संशयः विरोधो वा। तत्र समवायः संबन्धान्तरानपेक्षः संयोग-स्वरूपातिरिक्तः संबन्धविशेषः स्वयमविभाज्यः विभाजकधर्मः अयुतसिद्धः कल्पितः। स समवायः द्रव्य-गुणयोः जाति-व्यक्त्योः द्रव्य-कर्मणोः अवयव-अवयविनोः व्यक्ति-विशेषयोः पञ्चविधद्वन्द्वभूतयोर्मध्ये नियमितः। स च संयोगसम्बन्धप्रयोजकः संयोगस्य द्रव्याश्रितगुणविशेषत्वात्। गणितशास्त्रे यथा कश्चित् स्थिरविन्दुः स्वीक्रियते यमाश्रित्य तदतिरिक्ताः पदार्थाः स्वस्थितिमालभते तथैव समवायमाश्रित्य सर्वे द्वन्द्वभावाः तन्निष्ठसंबन्धाश्च कल्प्यन्ते। तद्यथा – शिरोरूहे विन्यस्ते ब्रह्मरन्ध्रोपरि मेरुः दृश्यते शिखाबन्धप्रयोजकः तथैव समवायः स्वयमविकारी कूटस्थः अपरसम्बन्धप्रवर्तकः। अथवा कश्चित् देवदर्शनाभिलाषी प्रातः सप्तमघटिकायां पर्वतशीर्षम् आरोहणं कुर्वाणः सायं सप्तमघटिकायां शीर्षमुपलभ्य दर्शनान्तरं पुनः परदिवसे प्रातः सप्तमघटिकायाम् अवरोहणं कुर्वाणः सायं सप्तमघटिकायां सानुदेशमुपस्थितः। तस्य गमनागमनपथि एकः विन्दुः अवश्यमासीत् यत्र स चलदपि उभयदिवसे एकस्मिन्नेव क्षणे स्थितवान् आसीत्। अथवा भूतले कस्मिंश्चित् पटे विन्यस्ते तस्यैव आकुञ्चितदशायां

च एकः मेरुः अवश्यमस्ति यमाश्रित्य पट-भूतलयोः संयोगः प्रवर्तते। तदेव मेरुत्वं स्थिरविन्दुत्वं वा समवायस्वरूपे निहितमिति विहितम्। यथा घट-घटरूपयोर्मध्ये। पाकजरूपोत्पत्तिकाले च पूर्वरूपविनाश-अपरूपोत्पत्तिकाले च तदधिकरणे घटे क्षणमपि रूपहानिः न जायते। उत्पत्तिकाले परमाणौ च आद्यक्षणवृत्ति-रूपाभावः कदापि नास्ति इत्यस्माकम् आशयः। प्रलयकाले सर्वभावध्वंसे रूप-परमाणु-संबन्धेषु स्वरूपतः सत्स्वपि असंबद्धानां तेषां द्वन्द्वभावः न प्रवर्तते। ततः यत्र यत्र यत्कालव्याप्यस्य समवायस्य संयोगादिसंबन्धजातद्वन्द्वभावप्रवर्तकत्वं तत्तत्कालव्याप्यत्वमेव समवायस्य नित्यत्वम्। तथा हि स्वयमविभाज्यत्वे सति संयोगादिसंबन्धवृत्ति-अयुतसिद्धद्वन्द्वभाव-प्रयोजकविभाजकत्वं समवायत्वम् इति लक्षणम् अनाविलम्। संयोगस्य स्वरूपतः विभाज्यत्वात् संयोग-विभाग-उभयप्रयोजकत्वमेव अस्ति इति विशेषः। अतः विभाज्यत्वे सति संयोग-विभाग-उभयवृत्ति-विभाजकधर्मविशेषः संयोगसंबन्धः इत्येतत् चारुलक्षणम्। द्वौ स्वरूपसंबन्धौ एकस्मिन् समवाये पर्यवस्यते। विश्वं जगत् स्वरूपादिसंबन्ध-प्रतियोगिकम् इति स्वरूप-संयोग-समवाय-प्रतियोगिकत्वं हि जगतः लक्षणम्। ततः विश्वं जगत् एकस्मिन्नेव बिन्दौ मेरुभावं लभते सकलसंबन्धानाम् अभिन्नप्रतियोगित्वात्। संबन्धानां तु परस्परसाकांक्षत्वात् अनन्तविस्तारवशाच्च तेषाम् आनन्त्यमेव स्वीकार्यम्। तत्संबन्धपरिच्छित्तिजालं बीजाङ्कुरवत्-अनादि-अनन्त-जगत्-प्रवाह इति परिदृश्यते। अत्र रहस्यमेतद् यत् एकः पदार्थः नानासमवायप्रतियोगी भूत्वा महज्जगज्जालं रचयति इति नव्यानामाशयविशेषः प्राचीनैः नोल्लिखितम्। यद्यपि कणादकल्पितमेव वस्तुनिचयम् अनुचिन्तयद्भिः नव्यैः आकारतः धर्मधर्मिभावमवलम्ब्य वा उपस्थाप्यते एतत्पङ्क्तिकपदार्थलक्षणम्। तत्र जगदारम्भकपरमाणवः व्याप्यवृत्तिधर्माः। अव्याप्यवृत्तिधर्मवत्त्वस्वीकारे तद्धर्माणाम् अधिकरणभेदे समापन्ने परमाणोः सावयवत्वमपरिहार्यम्। तन्निरासार्थं तस्य पारिमाण्डल्यं दर्शितं येन सर्वमनाकुलम्। का अत्र युक्तिः। पारिमण्डल्यवशात् व्याप्यवृत्तिधर्मवत्त्वाच्च निरवयवं स्यात्। सावयवत्वे च मेरुसर्षपयोस्तुल्यपरिमाणत्वापत्तेः अवयवानन्त्यकल्पनात् गौरवः अनवस्था च दुष्परिहरा। परमाणुनिष्ठसंयोगः व्याप्यवृत्तिरेव। द्वयोः परमाण्वोः मध्ये यः संयोगः तन्निष्ठाधेयतानिरूपिताधारतावत्त्वात् तत्र औपाधिकः विभाजकः (Abstract Punctuator) कश्चिदनुभाव्यते। परमाणुलक्षणं तु नित्यमूर्तद्रव्यत्वे सति व्याप्यवृत्तिगुणवत्त्वं परमाणुत्वमिति। समवायित्वे सति असमवेतत्वं नित्यद्रव्यत्वम्। ननु व्याप्यवृत्तिगुणवत्त्वे अणुक-द्व्यणुकयोः परिमाणभेदः न स्यात् तथा हि त्रसरेणौ। उच्यते व्याप्यवृत्तिगुणवत्वे सत्येव परिमाणभेदः स्यात् द्वयोरणुकयोः संयोगवशात् उत्पन्ने द्यणुके अभिनव-अवयविनि अभिनवपरिमाणोत्पत्तेः। अपि च तत्रैव आधार-आधेयभावः अवयव-अवयविभावः प्रभृतयः भावप्रत्ययाः एकस्मिन्नेव धर्मिणि औपाधिकधर्माः विभाजकाः संनिविशन्ते। जलपरमाणुनिष्ठ-आधारतानिरूपक-शुक्लरूपम् स्यन्दमानम्

अविभज्यमानमेव तिष्ठति न वा। वस्तुगत्या रूपिणि एकस्यैव अवयविनः अनुभवात् तद्गतावयवानां भेदे सत्त्वेऽपि अवयविभेदः न स्यात्। तथा हि आधाराधेयभाववशात् भेदे सिद्धेऽपि शुक्लोऽयम् इति व्यवहारः औपाधिकः। भावप्रत्ययानां च अयं विशेषः यत् तेषु सिद्धे समवायादिसंबन्धे स्वसंबद्धविषये यावत्संबन्धयोग्यत्वम् आपतति येन जगज्जालं विस्तार्यते। अवयविनस्तु समवायमाश्रित्य स्वावयवाधिकरणकाः भवन्त्येव। चतुर्विधाः अवयविनः। तद्यथा– स्वेदज-अण्डज-उद्भिज-जरायुजाः। तत्र नित्यद्रव्यभिन्नत्वे सति संयोगविभागनिमित्तत्वम् असमवायिकारणत्वमिति भाषापरिच्छेद-कारमतम् अङ्गीकार्यम्। समवायित्वे सति असमवेतत्वम् नित्यद्रव्यत्वम्। तद्भिन्नत्वम् अनित्यत्वम्। नित्यद्रव्यभिन्नत्वे सति संयोगविभागकारणीभूताः पदार्थाः क्रियाः। क्रियाजन्यसंयोगविभागवन्तः परमाणवः। सा च परिस्पन्दात्मिका क्रिया। अन्या च गमन-आगमन-आकुञ्चन-प्रसारण-ऊर्ध्वगमन-अधोगमनादि-अनुकूल-संयोग-विभाग-अन्यतरसंबन्धात्मिका भवति। एकमात्रपदार्थसमवेतत्वे सति असमवायित्वम् विशेषत्वम्। अनेकसमवेतत्वे सति असमवायित्वं जातित्वं सामान्यं वा। स्वभिन्नानधिकरणत्वे सति स्वसमवेतत्वम् अन्त्यावयवित्वम्। व्याप्याव्याप्योभयवृत्तिगुणसमवायित्वम् आत्मत्वम्। दव्यनधिकाव्याप्यवृत्तिधर्मवत्त्वं कालत्वम् अव्यासज्यवृत्तिधर्मकत्वं वा। दिक् च व्यासज्यवृत्तिधर्मसमवायित्वम्। आत्मसमवेतजीवत्वप्रयोजकसंयोगवत्त्वं मनः। एतद्भिन्नत्वं गुणत्वम्। इति संज्ञाप्रकरणम्।।

# शेषार्थविचारः

पूर्णिमा केलकर

कर्मादीनि कारकाणि षट्। तदतिरिच्य सप्तमः कारकविशेषो भर्तृहरिणा प्रतिपाद्यते। स एव कारकभेदो हरिणा शेषाधिकारे षष्ठ्यर्थ इति विस्तरेण प्रत्यपादि। स एव सम्बन्धरूपो भवति। सम्बन्धस्यापि कारकत्वमुररीकरोति हरिः। तथा च शेषषष्ठ्याः कारकषष्ठ्याश्च कथं विवेक इत्यस्मिन् लेखे निरूप्यते।

सा धनं विधुविभूषणस्य या साधनं मम करोतु मानसे
साधनं सकलसम्पदामियं याऽधनं खलु करोति साधनम्।
(वाक्यपदीये हेलाराजः साधनसमुद्देशे 156)

कर्मादिकारकषट्कातिरिक्तः सप्तमः कारकभेदः षष्ठ्यर्थ इति भर्तृहरिणोक्तम्। सोऽयं कारकविशेषः षष्ठ्यर्थ इति ग्रन्थकारेण शेषाधिकारे विस्तरेण विचारितः। षठ्यर्थ एव शेषरूपः सम्बन्ध इत्युच्यते। वस्तुतः स्वस्वामिभावादि-सम्बन्धः कारकप्रातिपदिकार्थव्यतिरिक्तः क्रियया सह न सम्बध्यते। यथा राजपुरुषः इत्यादौ राज्ञः पुरुषः इति विग्रहे षठ्यन्तस्य राज्ञः इति पदस्य क्रियया सह योगो न सम्भवति अतः कथं तस्य कारकत्वं स्वीकार्यम्। क्रियान्वयित्वं हि कारकत्वमिति स्वीकारात्। तदत्र षष्ठ्यन्तस्य राज्ञः इत्यस्य कारकत्वं कथं सम्भवेत्? राज्ञः इत्यस्य पदस्य क्रियया सह सम्बन्धाभावात्। कौमुदीकारैरपि षष्ठी शेषे इति सूत्रवृत्तौ स्पष्टमुक्तम्—कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः। तस्मिन् वाच्ये षष्ठीति। भाष्यकारस्तु कारकाणामविवक्षैव शेष इति स्वीकरोति। वाक्यपदीयकारः पुनः सम्बन्धस्यापि क्रियाकारकपूर्वकत्वात् सम्बन्धत्वं प्रतिपादयति— तदुच्यते—सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः। श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते। अयं सम्बन्धः कदाचिच्छ्रुतायां क्रियायामभिधीयते कदाचिच्च अश्रुतायां क्रियायाम्। तद्यथा—मातुः स्मरति—सर्पिषो जानीते। इत्यादौ श्रुता क्रिया। राज्ञः पुरुषः इत्यादौ अश्रुतायां क्रियायां सम्बन्धाभिधानम्। तदेवं वाक्यपदीयकारः सम्बन्धस्यापि

(षष्ठ्यर्थस्यापि) कारकत्वं स्वीकरोति।

वस्तुतः क्रियामन्तरेण सम्बन्धोऽपि नोपपद्यते। तथाहि राज्ञः पुरुषः इत्यादौ राज्ञि कर्तृत्वं पुरुषस्य सम्प्रदानत्वमनुभवसिद्धम्। राजा हि पुरुषाय धनं वा द्रव्यं वा ददाति तेन राजनि दानक्रियायाः कर्तृत्वं पुरुषे सम्प्रदानत्वं गम्यते। एवं हि क्रियाकारकभावपूर्वको राज–पुरुषयोः स्वस्वामिभावरूपसम्बन्धः शेषाख्यः षष्ठ्याभि-व्यज्यते। वृक्षस्य शाखा इत्यादौ लोकप्रसिद्धया वृक्षोऽधिकरणम्। देवदत्तस्य गौरित्यादौ प्रतिग्रहणादिभिः देवदत्तस्य कर्तृत्वं प्रतीयते। नटस्य शृणोति– मातुः स्मरति– भगवतो नारायणस्य अनुकरोति इत्यादिषु वाक्येषु नटादौ कर्मत्वं विद्यते तथापि कर्मत्वस्य अविवक्षया षष्ठी भवति। अत्रेदं विचारणीयं यद् विद्यमानं वस्तु स्थितिमद किञ्चिद् द्रव्यजातं वा कथमविवक्षितं स्यादिति। कथं नाम सतोऽविवक्षा? यद् वस्तु विद्यमानं वस्तु वर्तते तस्यैव विवक्षापि भवति विवक्षिते सति स्व– निमित्तां विभक्तिं प्रसूते। अस्मिन् विषये समाधीयते भाष्यकारैः– कथं पुनः सतो नामाविवक्षा? सतोप्यविवक्षा भवति। यथा लोके– अलोमिकैडिका–अनुदरा कन्या इत्यादयः प्रयोगाः दृश्यन्ते। अत्र अलोमिकेत्युक्ते सत्स्वपि लोमसु अतिविरलत्वात् लोम्नामसत्-कल्पानि लोमानि तस्याः सन्तीत्याशयो वक्तुः। अत एव अलोमिकेत्यभिधानं भवति। तथैव अनुदरा कन्या–इत्यादौ विद्यमानेऽप्युदरे अति सूक्ष्मत्वात् अनुदरेति प्रयोगः साधुः। उभयत्रापि अल्पार्थे नञ् प्रयुक्तः। तथा च विद्यमानस्यापि उदरस्य लोम्नां वा अविवक्षा सम्भवति। एवमेव शास्त्रेऽपि विद्यमानमपि कर्म अविवक्षितत्वात् षष्ठीं प्रयोजयति। कदाचिदसतोपि विवक्षा सम्भवति। तद्यथा–समुद्रो कुण्डिका–विन्ध्यो वर्धितकम्। अत्र कुण्डिकायां समुद्र इति प्रयोगो नानुपन्नः। क्व समुद्रो विशालतमः क्व च कुण्डिका अल्पीयसी? तथापि कुण्डिकायाः अति प्रशस्ततया विशालतया वा तस्यां समुद्र इति व्यवहारः उपपद्यते। वर्धितकं नाम अन्नराशिः तस्य अति विशालत्वात् विन्ध्यपवर्तसंज्ञा भवति।

तदित्थं शेषपदं द्विविधं व्याख्यातम्। भाष्यकारादिभिः कारकाणामविवक्षा शेषः इति स्वीकृतम्। सतामपि कर्मादीनां कथमविवक्षासम्भव इति दृष्टान्तैर्व्याख्यातम्। अयमेव शेषपदार्थः स्वस्वामिभावादिसम्बन्धरूपेण अभिधीयमान षष्ठीविभक्तिं प्रयोजयति। नव्यानां मते शेष इत्यस्य स्वस्वामिभावादिसम्बन्ध एवार्थः। स च कारकप्राति-पदिकार्थव्यतिरिक्तः सन् षष्ठीं प्रयोजयति।

निष्कर्षतः सम्बन्धार्थे षष्ठीति सूत्रार्थे निष्पन्ने पुनरिदं विचार्यते सम्बन्धो हि द्विष्ठः तर्हि कस्मात् षष्ठी विधेया? राज्ञःपुरुषः इत्यादौ राजपुरुषयोर्मध्ये स्वस्वामिभावादिः सम्बन्धो विद्यते। तस्य सम्बन्धस्य बोधिका षष्ठी राजन् पदाद् विधेया आहोस्वित् पुरुषपदादिति प्रश्नः। मञ्जूषाकारैः स्पष्टमुक्तम्–द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु

भेदकात्। भेदको नाम विशेषणम्। षष्ठीविभक्तिः विशेषणादेव भवति नतु विशेष्यात्। विशेष्यात् तु प्रथमैव भवति। यदि उभयोः विशेषण –विशेष्याभ्यां युगपत् षष्ठी उत्पद्येत तदा उभयाभ्यां सम्बन्धिभ्यां षष्ठीद्वये सम्बन्धद्वयं प्रतीयेत। अतः एकैव षष्ठी विशेषणात् क्रियमाणा सम्बन्धस्य वाचिका भवति। अस्मिन् अभियुक्तानां मतं ग्राहयम्। ते उपदिशन्ति–शेषो नाम परार्थः इति। राज्ञः पुरुषः इत्यत्र विशेषणस्य परार्थत्वात् शेषभाव इति ततः षष्ठी भवति। यदा तु द्वावपि विशेषणीभूतौ भवतः तदा द्वाभ्यामपि षष्ठी भवत्येव। यथा– राज्ञः पुरुषस्य गृहम् इत्यादौ प्रतीयमानः स्वस्वामिभावरूपः सम्बन्धो वाक्यार्थ एव। पुरुषे प्रतीयमानो यः सम्बन्धः स केवलं प्रातिपदिकार्थः। स च वाक्यार्थबलात् प्रतीयते। पुरुषशब्दात् प्रातिपदिकार्थमात्रे प्रथमैव भवति। पुरुषे प्रतीयमानः प्रातिपदिकार्थः अन्तरङ्गः तत्र भासमानं विशेषत्वं राज्ञःपदसन्निधानात् गम्यते। अतः तद् बहिरङ्गम्। सारतः पुरुषशब्दात् प्रथमैव सिद्वा। राजनि सम्बन्धरूपं यदाधिक्यं तत् पुरुषशब्दसंसर्गमन्तरेणापि प्रतीयते। राज्ञः पुरुषस्य कम्बलः अथवा राज्ञः पुरुषस्य गौरित्यादिप्रयोगे एकस्यैव पुरुषपदस्य पर्यायेण गुणप्रधानभावोऽभिलक्ष्यते। अत्र पुरुषे द्वौ धर्मौ १–प्राधान्यप्राधान्यं च। राजनिरूपितं प्राधान्यम् कम्बलनिरूपितमप्राधान्यम्। यथा लोके स्वपुत्रेण सहागतः पुत्रः इत्युक्ते सहयोगे पुत्रशब्दात् तृतीया भवति। वाक्येऽस्मिन् पुत्रशब्दोऽप्रधानः आगमनक्रियां प्रति पितुरेव प्राधान्यम्। तथापि स एव पुत्रशब्दःस्वपुत्रेण इति समासे प्राधान्यं भजते।

षष्ठी शेषे इति सूत्रे शेषपदस्य प्रयोजनविषयेऽपि विचारः कर्तव्यः। अन्यत्र कारकेषु कर्मणि द्वितीया–कर्तृकरणयोस्तृतीया–इत्यत्र कर्मणि द्वितीयैव कर्तृकरण–योस्तृतीयैव नान्यत्रेति प्रत्ययनियमोऽवगम्यते। तद्वदत्रापि शेष एवार्थे षष्ठी अन्यत्र कर्मादौ नेति नियमबोधनाय शेषग्रहणं सूत्रे आवश्यकम्। अर्थनियमपक्षे अर्थाः नियताः भवन्ति प्रत्ययाः (विभक्तयः) अनियताः सन्ति। तदा षष्ठी –इत्येवन्मात्रं सूत्रं नियमार्थं भविष्यति। यत्र षष्ठी चान्या च विभक्तिः प्राप्नोति तत्र षष्ठ्येभवतीति नियमः। अस्मिन् पक्षे शेषग्रहणमनावश्यकम्।

इदानीमिदं विचारणीयम्–षष्ठी शेषे इति शेषत्वेनैव सर्वत्र षष्ठ्यायां सिद्धायां पुनः ज्ञोऽविदर्थस्य करणे (२–३–५१) इत्यारभ्य कृत्वोर्थप्रयोगे कालेऽधिकरणे (२–३–५८) इत्यन्तम् अष्टसु सूत्रेषु करणादीनां शेषत्वेन विवक्षिते षष्ठी विधीयते। [ज्ञोऽविदर्थस्य करणे २–३–५१ अधिगर्थदयेषां कर्मणि २–३–५२ कृञः प्रतियत्ने २–३–५३ रुजार्थानां भाववचनानामज्वरेः २–३–५४ आशिषि नाथः२–३–५५ जासि-निग्रहण- नाट-क्राथ-पिषां हिंसायाम् २–३–५६ व्यवहृपणोः समर्थयोः २–३–५७ कृत्वोर्थप्रयोगे कालेऽधिकरणे २–३–६४], ज्ञोऽविदर्थस्य॰ इति सूत्रमारभ्य कृत्वोर्थप्रयोगे॰

इत्यन्तं चतुर्दशसूत्रेषु दिवस्तदर्थस्य इत्यादिषट्सूत्रीं विहाय अवशिष्टायामष्टसूत्र्यां शेषे इति पदमनुवर्तते। तेन माषाणामश्नीयात् इव सर्वत्र षष्ठी शेषे इति सूत्रेणैव इष्टसिद्धिर्भविष्यति। अष्टसूत्र्यारम्भः निष्फल एव प्रतिभाति। तद् व्यर्थीभूय नियमाय कल्पते। नियमस्वरूपमिदम्– परिगणितेन सूत्राष्टकेन षष्ठ्येव भवति न तु तस्याः लुग्भवतीत्यर्थः। तथा च लुकः प्रयोजकीभूतः समासो न भवतीति तात्पर्यम्। समासे कृते सुपो धातुप्रातिपदिकयोरिति(२-४-७१)इति सूत्रेण षष्ठी लुप्येत। अत एव प्रतिपदविधाना षष्ठी न समस्यते इति वार्त्तिकारम्भः कृतः। भर्तृहरिणाप्युक्तम्– कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः। प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये।

तदेवं शेषत्वविवक्षायां सर्पिषो ज्ञानम्– मातुः स्मरणम् इत्यादीन्यसमस्तान्येव साधूनि। शेषत्वेऽविवक्षिते हरिःस्मरणम्–इत्यादौ कर्तृ कर्मणोः कृति(२-३-६५)इति सूत्रेण कृद्योगषष्ठ्याः समासे इष्टसिद्धिरिति। शेषषठ्यां समासनिषेधेऽपि सर्वत्र कारकषष्ठ्यां सिद्ध एव समासः तर्हि किं प्रयोजनं समासनिषेधस्येति? तदुच्यते– कर्तृकर्मणोः कृति इति सूत्रेण षष्ठ्यामुत्पन्नायां षष्ठीति सूत्रेण(२-२-८) समासे गतिकारकोपपदात् कृत् (६-२-१३९) इति सूत्रेण मध्योदात्तत्वं भवति। शेषषष्ठ्याः समासे तु अन्तोदात्तत्वं स्यात्(६-१-२२०) अयमेव कारकषष्ठ्याः शेषषष्ठ्याश्च भेदः भाषायामर्थप्रतिपादनदृष्ट्या स्वराणां महत्त्वं कथं सर्वातिशायीत्यनया व्यवस्थया स्पष्टं प्रतिभाति। अत एवोक्तम् महाभाष्ये–

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्।** (पस्पशा)

सरतः इदमवधेयम्– ज्ञोऽविदर्थस्य करणे इत्याद्यष्टसूत्र्यां प्रतिपदविधाना षष्ठी वर्तते। दिवस्तदर्थस्य–विभाषोपसर्गे–द्वितीया ब्राह्मणे–प्रेष्यब्रुवोर्हविषो देवता सम्प्रदाने–चतुर्थ्यर्थे बहुलं छन्दसि–यजेश्च करणे–इति षट्सु सूत्रेषु कारकषष्ठी विहिता। अतः परं कर्तृकर्मणोः कृति (२-३-६५) इत्यादिषु सूत्रेषु शेषपदस्याधिकारो निवृत्तः। अतः शेषे षष्ठीति सूत्रेण अप्राप्ता षष्ठी कृद्योगे विधीयते। कृद्योगे कर्तरि कर्मणि च षष्ठीविभक्तिर्भवति। यत्र कृद्योगे कर्तृकर्मणोरुभयोः प्रयोगः स्यात् तत्र उभयप्राप्तौ कर्मणि (२-३-६६) इति सूत्रेण कर्मण्येव षष्ठी भवति न तु कर्तरि। यथा– आश्चर्यो गवां दोहोऽगोपेन – अत्र गवामिति कर्मणि षष्ठी। जगतः कर्ता कृष्णः इत्यादावपि जगतः इति कर्मणि षष्ठी भवति। क्तस्य च वर्तमाने (२-३-६७) इति सूत्रेण वर्तमानकाले विहितस्य क्तस्य योगे षष्ठी स्यात्। राज्ञां मतो बुद्धो पूजितो वा इत्यादौ राज्ञामिति षष्ठी सिद्ध्यर्थं क्तस्येति क्तस्य च वर्तमाने (२-३-६७) सूत्रारम्भो व्यर्थः। सामान्येन कर्तृकर्मणोरित्यनेनैव (२-३-६५) षष्ठी सेत्स्यति-ठति अ वाच्यम्। न लोकाव्यय-निष्ठा-खलर्थतृनाम् (२-३-६९) इति सूत्रेण निष्ठाप्रत्यययोगे

षष्ठ्याः प्रतिषेधो भवति तस्य पुनः प्राप्त्यर्थं षष्ठीविधानार्थं वा क्तस्य चेति सूत्रारम्भः। अत्र मतिबुद्धिपूजार्थेभ्यश्च (३-२-१८८)इति सूत्रेण वर्तमाने क्तो विहितः। अधिकरणवाचिनश्च (२-३-६८) इति सूत्रमपि प्रतिषेधार्थापवादार्थमावश्यकम्। क्तोऽधिकरणे (३-४-७६) इति सूत्रेण अधिकरणे क्तो विहितः तद्योगे न लोकाव्यय ०इत्यादिना षष्ठ्याः निषेधो मा भूदिति षष्ठीविधानार्थं अधिकरणवाचिनश्चेति सूत्रारम्भ आवश्यकः। तेन इदमेषामासितम्—शयितम् वेति प्रयोगसिद्धिः।

कर्तृकर्मणोः कृति इति सूत्रेण प्राप्ता षष्ठी ल—उ—उक—अव्यय—निष्ठा—खलर्थ- तृनां प्रयोगे प्रतिषिध्यते। ल इत्यनेन लादेशा अभीष्टाः। तथा च शतृशानचौ शानन्-चानश्-कानच् क्वसु किकिनश्चेति प्रत्ययाः लादेशेषु गृह्यन्ते। वस्तुतः तृन्निति प्रत्याहार – ग्रहणम्। शतृशानचौ इति तृ शब्दादारभ्य आ तृनो नकारात् तृन् प्रत्याहारः। अनेन सूत्रेण निषेधे सति कुर्वन् कुर्वाणो वा सृष्टिं हरिः इत्यत्र सृष्टिमिति षष्ठी न भवति अपितु द्वितीयैव सिद्धयति। एवमेव उः— इत्यस्य हरिं दिदृक्षुः/हरिम् अलङ्करिष्णुः। उकः— दैत्यान् घातुको हरिः अव्ययम्— जगत् सृष्ट्वा/ सुखं कर्तुम्। निष्ठा— विष्णुना हताः दैत्याः / दैत्यान् हतवान् विष्णुः। खलर्थः—ईषत्करः प्रपञ्चो हरिणा। शानन्—सोमं पवमानः। वानश्—आत्मानं मण्डयमानः। शतृ—वेदमधीयन्। तृन्-कर्ता लोकान् सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः शेषे षष्ठी तु सर्वत्र भवत्येव।

भविष्यति काले विहितस्य अकस्य (अक प्रत्यययोगे)योगे भविष्यति काले आधमर्ण्ये चार्थे विहितस्य इनः योगेऽपि षष्ठ्याः निषेधः कर्तव्यः। तेन कटं कारको व्रजति/ओदनं भोजको व्रजति इत्यादयः प्रयोगाः सिध्यन्ति। एवमेव इन्नन्तेषु ग्रामं गमी/गामी वा। आधमर्ण्येऽर्थे— शतं दायी सहस्र दायी— इत्यादीनां सिद्धिर्भवति। (अकेनोर्भविष्यत्याधमर्ण्ययोः २-३-७०) भवता भवतो वा कटः कर्तव्यः इत्यादिषु प्रयोगेषु विकल्पेन षष्ठीविभक्तिर्भवति। तदर्थं कृत्यानां कर्तरि वा – इति सूत्रारम्भः। अनेन कर्तृकर्मणो कृतिः इति नित्यं प्राप्ता षष्ठी विकल्प्यते।

तदिदं सङ्कलनया 'दिवस्तदर्थस्य' इत्यारभ्य अधिकरणवाचिनश्चेत्यन्तं एकादश सूत्राणि कारकषष्ठीं प्रयोजयन्ति तत्र चतुर्थ्यर्थे बहुलं छन्दसि (२-३-६२) यजेश्च करणे (२-३-६३)इति सूत्रद्वयं छन्दोविषयकम्। दिवस्तदर्थस्य- (२-३-५८) विभाषोपसर्गे (२-३-५९) द्वितीया ब्राह्मणे (२-३-६०) प्रेष्यब्रुवो ० (२-३-६१)इति षट्सु सूत्रेषु तिङन्तमुदाहरति। शतस्य दीव्यति शतस्य शतं वा प्रतिदीव्यति इत्यादीनि दिव-धातोरुदाहरणानि सन्ति। तदेवं शेषषष्ठी—कारकषष्ठ्योर्विवेकः।

# ज्यौतिषशास्त्रे छायाविज्ञानम्

हंसधरझाः

**प्राच्यानां ग्रहणविषयकं छायागणितं नितरां वैज्ञानिकम्। भूस्थितोऽपि जनः आकाशीयग्रहणस्य स्पर्शमोक्षादिज्ञानं प्राप्नोतीति नेदं सामान्यं विज्ञानम्। अतो निस्सन्देहं प्राच्यानां ज्योतिषशास्त्रीयं छायाविज्ञानं विलक्षणमित्यस्मिन् प्रबन्धे प्रतिपाद्यते।**

महात्मनो लगधस्य "ज्योतिषं मूर्ध्नि संस्थितम्" वचनमिदं नहि काल्पनिकं किन्तु सत्यमेव। यतो हि ज्यौतिषं नाम ज्योतिषशास्त्रं, ज्योतिषशास्त्रञ्च ज्योतिषां ग्रहनक्षत्रादीनां गतिस्थित्यादिकमधिकृत्य कृतं शास्त्रम्। ग्रहर्क्षादीनां चारादिवशेनैव दिव्यदृष्टयो भारतीयमहर्षयो ज्योतिषस्य सिद्धान्तभागं, संहिताभागं, होराभागं वोचुः। अर्थाज्ज्यौतिषं खलु ग्रहगणिताधारितमिति। इदमेव कारणं यदुपर्युक्तश्लोकांशे ज्यौतिषमित्यत्र गणितमितिशब्दमुच्चारयन्ति केचित्। किन्तूभयोरपि शब्दयोरत्र समानमेवाशय इत्यपि स्पष्टमेव विदाम्।

एवमिदं खलु ज्यौतिषं ग्रहगणिताधारितम्। ग्रहगणितञ्चात्रत्यमत्यन्तं प्राचीनम्। प्राचीनेऽत्र ग्रहगणिते खगोलीया विविधा अपि विषया दृश्यन्ते प्रपञ्चिताः , ये खलु नूनमेव भजन्ते वैलक्षण्यम्। त एव विविधा अपि विषया विविधेष्वधिकारेषु विभज्य विवेचिताः सूर्यसिद्धान्तादिग्रन्थेषु प्राच्यैः। यथा - मध्यमाधिकारः, स्पष्टाधिकारः, त्रिप्रश्नाधिकारः, चन्द्रग्रहणाधिकारः, सूर्यग्रहणाधिकार इत्यादयः।

तत्र हि निखिलेष्वपि सिद्धान्तग्रन्थेषु त्रिप्रश्नाधिकारचन्द्रग्रहणाधिकारादयस्तथाभूतास्सन्ति केचनाधिकारा यत्र विशेषेण सन्ति प्रपञ्चितानि च्छायागणितानि, यानि खलु नूनमेव सन्ति वैज्ञानिकानि। छायागणितमाध्यमेन ग्रहगणितस्य विविधा अपि विषयाः सन्ति प्रपञ्चिता, येषु पलभाद्वारा चरखण्डादिसाधनम्, पलभाद्वारा लम्बांशाक्षांशज्ञानं, मध्यच्छायातो लम्बांशाक्षांशपलभाज्ञानं, मध्यच्छायातो रविसाधनम्, छायावशाद्दिग्ज्ञानं, भच्छायावशाद् ग्रहणज्ञानमित्यादिविषया विराजन्ते। एवं चाष्टानामक्षक्षेत्राणामपि ज्ञाने मूलरूपेण च्छायागणितमेवास्ति, यतो हि निखिलानामप्यक्षक्षेत्राणां ज्ञाने पलभा मूलमस्ति। तत्र हि

पलभानाम द्वादशाङ्गुलशङ्कोश्छायैव। एवञ्च चन्द्रग्रहणे भूभासाधने, तत्रापि ग्रासादिसाधने, सर्वत्रैव मूलरूपेण च्छायागणितमेवास्ति। यथात्रोदाहरणरूपेणोपस्थाप्यन्ते कानिचिज्ज्यौतिष-शास्त्रोक्तानि च्छायागणितानि।

## (1) चरखण्डादिसाधने छायागणितम् :-

जानन्त्येव विज्ञा यद्धोराशास्त्रस्य मूलमस्ति द्वादशभावास्तथा द्वादशभावस्य मूलमस्ति प्रथमं लग्नम्। अर्थादितल्लग्नमाश्रित्यैव निखिलमपि होराशास्त्रं प्रश्नशास्त्रं वा प्रवर्तते। तस्य च होराशास्त्रमुख्यभूतस्य प्रथमलग्नस्य साधने आवश्यकम्भवति स्वोदयज्ञानम्। स्वोदयज्ञानार्थमपेक्षितम्भवति चरखण्डज्ञानं, तथा तेषाञ्चरखण्डानां ज्ञानं भवति पलभामाध्यमेनैव। यथोक्तं ग्रहलाघवे[1] :-

**मेषादिगे सायनभागसूर्ये दिनार्धभा या पलभा भवेत्सा।**
**त्रिष्ठा हता स्युर्दशभिर्भुजङ्गैर्दिग्भिश्चरार्धानि गुणोद्धृतान्त्या।।** इति।।

अर्थादयनांशसहिते भानौ मेषादौ गतवति सति द्वादशाङ्गुलशङ्कोर्मध्याह्नकालिकी या छाया सा पलभा भवति। सा छाया (पलभा) स्थानत्रये स्थाप्या। तत्र प्रथमस्थाने दशभिः, द्वितीयस्थाने अष्टाभिस्तथा तृतीयस्थाने त्रिहृताभिर्दशभिः संगुण्य त्रीणि चरखण्डानि भवन्ति।

यथा कल्प्यते, स्थानविशेषस्य पलभा = 5.30 अस्ति। अत उपर्युक्तसूत्रानुसारम्-

| | | | | | | |
|---|---|---|---|---|---|---|
| 5.30 × 10 | = | 50.300 | = | 55.00 | = | 55 |
| 5.30 × 8 | = | 40.240 | = | 44.00 | = | 44 |
| 5.30 × (10÷3) | = | 55÷3 | = | 18.20 | = | 18 |
| एवं चरखणानि | = | 55। 44। 18 इति। | | | | |

एतानि चरखण्डान्यनुसृत्य स्वोदयसाधनम्, यथा [2] -

**लङ्कोदया 'विघटिका गजभानि गोङ्क-**
**दस्रास्त्रिपक्षदहनाः क्रमगोत्क्रमस्थाः।**
**हीनान्विताश्चरदलैः क्रमगोत्क्रमस्थै-**
**र्मेषादितो धटत उत्क्रमतस्त्विमे स्युः।।** इति।

अत्र श्लोके पूर्वार्धे लङ्कोदयाः कथितास्तथोत्तरार्धे लङ्कोदयचरखण्डयोः संस्कारेण स्वोदयसाधनं प्रतिपादितम्। यथा –

| लङ्कोदयाः | चरखण्डानि | स्वोदयाः |
|---|---|---|
| मेषः,मीनः, | 278 – 55 | = 223 |
| वृषः,कुम्भः, | 299 – 44 | = 255 |
| मिथुनः,मकरः, | 323 – 18 | = 305 |
| कर्कटः,धनुः, | 323 + 18 | = 341 |
| सिंहः,वृश्चिकः, | 299 + 44 | = 343 |
| कन्या,तुला, | 278 + 55 | = 333 |

एवं ज्ञातेषु स्वोदयमानेष्वेव लग्नसाधनं सम्भवम्। यतो हि लग्नसाधने सायनसूर्यस्य भुक्तांशं भोग्यांशं वा स्वदेशीयोदयमानेनैव संगुण्य त्रिंशद्भिर्विभज्य सायनसूर्यस्य भुक्तकालज्ञानं भोग्यकालज्ञानं वा विधाय ततश्च सूत्रानुसारं शेषविधिना लग्नज्ञानं क्रियते। यथावलोक्यतां सूर्यसिद्धान्तीयं लग्नानयनम् [3] –

**गतभोग्यासवः कार्या भास्करादिष्टकालिकात्।**
**स्वोदयासुहता भुक्त-भोग्या भक्ताः खवह्निभिः।।**

--- ---- -----

**अभीष्टघटिकासुभ्यो भोग्यासून् प्रविशोधयेत्।**
**तद्वत् तदेष्यलग्नासूनेवं यातान् तथोत्क्रमात्।।**

**शेषं च त्रिंशताऽभ्यस्तमशुद्धेन विभाजितम्।**
**भागैर्युक्तं च हीनं च तल्लग्नं क्षितिजे भवेत्।।** इति।।

एवमुपर्युक्तविवेचनया स्पष्टं यद्धोराशास्त्रेऽत्यन्तं महत्त्वपूर्णस्य प्रथमलग्नस्य साधने पलभाया अर्थाच्छायागणितस्य प्रामुख्येनास्त्युपयोग इति।।

## (2) अक्षक्षेत्रेषु च्छायागणितम् --

पूर्वप्रतिपादितेन **"मेषादिगे सायनभागसूर्ये दिनार्धभा या पलभा भवेत्सा।"** गणेशदैवज्ञवचनेनानेन स्पष्टमेव यत् सायनमेषादौ सायनतुलादौ वा द्वादशाङ्गुल-

शङ्कोर्मध्याह्नकालिकी छाया पलभा भवति। सूर्यसिद्धान्तेऽप्युक्तं, यथा [4] -

**एवं विषुवती छाया स्वदेशे या दिनार्धजा।**
**दक्षिणोत्तररेखायां सा तत्र विषुवत् प्रभा।। इति।।**

अत्र मदुक्तं पद्यं यथा [5] -

**सायनाजतुलादिस्थे सूर्ये दिनदलोद्भवा।**
**द्वादशाङ्गुलशङ्कोर्या छाया सा पलभा स्मृता।। इति।।**

अस्याश्च पलभाया ग्रहगणिते महानुपयोगः। यतः समग्रेऽपि ग्रहगणितेऽक्षक्षेत्राणामुपयोगः प्रायो भवत्येव तथाऽक्षक्षेत्रेषु मूलमक्षक्षेत्रं तदेव यत्र पलभा भुजः, द्वादशाङ्गुलशङ्कुः कोटिः, तथा पलकर्णः कर्ण एते त्रयो भुजा भवन्ति। अस्य महत्त्वं प्रतिपादयँल्लिखति भास्करो यत् [6] -

**भुजोक्षभा कोटिरिनाङ्गुलो ना कर्णोऽक्षकर्णः खलुमूलमेतत्।**
**क्षेत्राणि यान्यक्षभवानि तेषां विद्येव मानार्थयशःसुखानाम्।। इति।।**

अर्थान्मानार्थयशःसुखानां मूलं यथा विद्या भवति तथैव निखिलानामप्यक्षक्षेत्राणां मूलमिदं पलभा-द्वादशाङ्गुलशङ्कु-पलकर्णरूपमक्षक्षेत्रं ज्ञेयम्। अत्र मद्वचनं यथा [7] -

**पलभा यत्र बाहुः स्यात् कोटिर्ना द्वादशाङ्गुलः।।**

**तयोर्वर्गैक्यमूलञ्च पलकर्णाभिधा श्रुतिः।**
**तज्जात्यत्रिभुजं ह्याद्यमक्षक्षेत्रं प्रकीर्तितम्।।**

**यतोऽक्षांशसमश्चैकः कोणो भवति तत्र वै।**
**शङ्कुपलश्रुतिभ्याञ्च समुत्पन्नस्त्रिबाहुके।।**

**अक्षक्षेत्राणि यानि स्युस्तेषां मूलमिदं तथा।**
**मानार्थसुखसम्प्राप्तौ मूलं विद्या स्मृता यथा।। इति।।**

अतः स्पष्टं यज्ज्यौतिषशास्त्रे ग्रहगणितस्य प्राथम्यम्, तथा ग्रहगणितेऽक्षक्षेत्राणां, तथा चाक्षक्षेत्रेषु पलभाया अर्थाच्छायागणितस्य महत्त्वमस्तीति। एतच्च प्राच्यानां पलभाजन्यं छायागणितं वैज्ञानिकं, तथ्यपूर्णञ्चेत्यत्र न सन्देहावसरः।।

### (3) लम्बांशाक्षांशसाधने छायागणितम् -

**स्वखस्वस्तिकनिरक्षखस्वस्तिकयोः स्वसमस्थानध्रुवस्थानयोर्वाऽन्तरं याम्योत्त-**

रवृत्तेऽक्षांशास्तथा स्वखस्वस्तिकध्रुवस्थानयोरन्तरं लम्बांशा इति विदितमेव विदाम्। अनयोरक्षांशलम्बांशयोः खगोलीयगणिते महानुपयोगो भवतीतिहेतोरनयोः साधनं प्रायो विहितमेव प्राचीनैः सिद्धान्तज्योतिषग्रन्थेषु।

यस्मिञ्जात्यत्रिभुजे एकः कोणोऽक्षांशसमो भवति तत्त्रिभुजमेवाक्षक्षेत्रमुच्यते। अत्र हि अक्षक्षेत्रे एकः कोणोऽक्षांशसमः, अपरः कोणो लम्बांशसमस्तथा तृतीयः कोणो नवत्यंशमितः। तत्र हि अक्षकोणस्य लम्बांशकोणस्य च साधनं विषुवच्छायामाध्यमेनैव कृतं प्राच्यैः। यथा सूर्यसिद्धान्ते [४] -

**शङ्कुच्छायाहते त्रिज्ये विषुवत्कर्णभाजिते।**
**लम्बाक्षज्ये तयोश्चापे लम्बाक्षौ दक्षिणौ सदा।।** इति।।

अर्थात् त्रिज्या शङ्कुगुणिता पलकर्णभक्ता फलं लम्बज्या भवति तथा त्रिज्या पलभागुणिता पलकर्णभक्ता फलमक्षज्या भवति। तयोर्लम्बाक्षज्ययोश्चापे कृते सति क्रमेण लम्बांशा अक्षांशाश्च भवन्ति।

वस्तुतोऽत्र बीजमिदं यत् पलभा भुजः, द्वादशाङ्गुलशङ्कुः कोटिः, पलकर्णः कर्ण इत्येकमक्षक्षेत्रम्। अक्षज्या भुजः, लम्बज्या कोटिः, त्रिज्या कर्ण इत्यन्यदक्षक्षेत्रम्। अनयोर्जात्यत्रिभुजयोस्त्रयाणां कोणानामेकजातित्वेन साजात्यमतोऽनुपातः। यदि पलकर्णे शङ्कुकोटिस्तदा त्रिज्याकर्णे केति ?

$$\text{फलम् लम्बज्या} = \frac{\text{शङ्कुः} \quad \text{त्रिज्या}}{\text{पलकर्णः}} \text{।}$$

एवं पलकर्णे पलभा भुजस्तदा त्रिज्याकर्णे क इति ?

$$\text{फलमक्षज्या} = \frac{\text{पलभा} \quad \text{त्रिज्या}}{\text{पलकर्णः}} \text{।}$$

लम्बज्यायाश्चापं लम्बांशाः, अक्षज्यायाश्चापमक्षांशा इति।

वस्तुतो विषुवच्छायाद्वारा लम्बांशाक्षांशसाधनमेतत् प्राच्यानां बुद्धिवैलक्षण्यमेव द्योतयति। यतः क्वास्ति नभोमण्डले स्वखस्वस्तिकनिरक्षखस्वस्तिकयोरन्तरं याम्योत्तरमण्डलीयं खण्डमक्षांशाः, तथा च क्वास्ति स्वखस्तिकध्रुवस्थानयोरन्तरं याम्योत्तरवृत्तीयं खण्डं लम्बांशाः, ययोर्ज्ञानं भूस्थितेनैव जनेन द्वादशाङ्गुलशङ्कु-पलभा-पलकर्णसाहाय्येनैव कर्तुं शक्यते। अतो नात्रापि सन्देहावसरो यत् प्राच्यानां छायागणितीयं विज्ञानमिदं प्रशंसनार्हमेवेति।।

(4) मध्याह्नच्छायाज्ञानान्नतकालज्ञानं ततश्चाक्षांशलम्बांशपलभाज्ञानम् -

ज्यौतिषशास्त्रे नहि विषुवच्छायावशादेवाक्षांशलम्बांशसाधनं प्रतिपादितं प्राच्यैः, किन्तु यस्मिन् कस्मिन् दिनेऽपि मध्याह्नच्छायावशात्तत्साधनं कर्तुं शक्यत इत्यप्याहुस्ते। यथाऽवलोक्यतां सूर्यसिद्धान्ते [9] -

मध्यच्छायाभुजस्तेन गुणिता त्रिभमौर्विका।।
स्वकर्णाप्ता धनुर्लिप्ता नतास्ता दक्षिणे भुजे।
उत्तराश्चोत्तरे याम्यास्ताः सूर्यक्रान्तिलिप्तिकाः।।

दिग्भेदे मिश्रिताः साम्ये विश्लिष्टाश्चाक्षलिप्तिकाः।
ताभ्योऽक्षज्या च तद्वर्गं प्रोज्झ्य त्रिज्याकृतेः पदम्।।
लम्बज्याऽर्कगुणाऽक्षज्या विषुवद्भाऽथ लम्बया। इति।।

अत्राक्षांशसाधनं विवक्षुरादौ नतांशसाधनं वक्ति। यथा - मध्यन्दिने क्षितिजकेन्द्रे स्थापितस्य द्वादशाङ्गुलशङ्कोर्या छाया स भुजः कल्पितः। तेन भुजेन त्रिज्या गुणिता, शङ्कुच्छायावर्गयोगपदरूपेण पलकर्णेन भक्ता, तदा यत्फलं तस्य चापकला नतकला भवन्ति। ताश्च नतकला दक्षिणे भुजे सति उत्तरा भवन्ति तथा उत्तरे भुजे सति दक्षिणा भवन्ति।

एवं ज्ञाते नते अक्षांशसाधनं यथा - ता रवेर्नतकलास्तथा दिनार्धकालिकरविक्रान्तिकलाश्च दिग्भेदे युक्ताः कार्याः, दिक्साम्ये चान्तरिताः कार्यास्तदाऽक्षांशा भवन्ति। अत्रेदमुक्तं भवति, यदा रवेर्नतकला दक्षिणाः क्रान्तिश्चोत्तरास्तदा तयोर्योगेनाक्षकलाः, एवं यदा रवेर्नतकला दक्षिणाः क्रान्तिश्च दक्षिणा तदाऽन्तरेणाक्षकला भवन्तीति।

अथ ज्ञातेऽक्षांशे लम्बांशसाधनं यथा - अत्र 'इष्टचापतो ज्यानयनविधिना'[10] साधिताक्षकलाभ्योऽक्षज्यां प्रसाध्य तद्वर्गं त्रिज्यावर्गाद्विशोध्य यद् भवति, तस्य पदं लम्बज्या ज्ञेया। अत्र लम्बज्यातः लम्बांशज्ञानार्थं 'ज्यातश्चापानयनविधि'[11] रनुसरणीयः।

एवं ज्ञातायां लम्बज्यायां पलभासाधनं यथा - अक्षज्या द्वादशभिर्गुणिता लम्बज्यया भक्ता तदा लब्धिमिता पलभा भवतीति।।

वस्तुत उपर्युक्तं मध्याह्नच्छायातो नतांशज्ञानं, लम्बांशज्ञानमथवा पलभाज्ञानं, सर्वमपि च्छायाविज्ञानस्य नूनमेव विलक्षणमुदाहरणं ज्यौतिषशास्त्रे।।

(5) मध्याह्नच्छायातो रविसाधनम् -

ज्यौतिषे मध्याह्नच्छायावशाद् रविसाधनमपि विलक्षणमेव विज्ञानम्। सुदूरे स्थितस्य भास्करस्य भूस्थितेन जनेन मध्याह्नच्छायावशाद् राश्यादिज्ञानं कथं कर्तुं शक्यत इति प्रतिपादयँल्लिखति सूर्यसिद्धान्ते [12] -

**स्वाक्षार्कनतभागानां दिक्साम्येऽन्तरमन्यथा।**
**दिग्भेदेऽपक्रमः शेषस्तस्य ज्या त्रिज्यया हता।।**

**परमापक्रमज्याप्ता चापं मेषादिगो रविः।**
**कर्क्यादौ प्रोज्झ्य चक्रार्धात् तुलादौ भार्धसंयुतात्।।**
**मृगादौ प्रोज्झ्य भगणान्मध्याह्नेऽर्कः स्फुटो भवेत्। इति।।**

अर्थात् स्वदेशे येऽक्षांशास्तथा सूर्यस्य दिनार्धकालिकास्तात्कालिका ये नतांशास्तेषामेकदिक्त्वे सति अन्तरं कार्यम्, तथा अक्षांशानां नतांशानाञ्च दिशोर्भिन्नत्वे सति योगः कार्यस्तदा शेषः सूर्यस्य क्रान्तिर्भवति। तस्य च सूर्यक्रान्तेर्या ज्या सा त्रिज्यया (34।38) गुणिता परमक्रान्तिज्यया भक्ता तदा यल्लब्धं तस्य यच्चापं, मेषादिराशित्रयगतो रविश्चेत्तदा तावानेव सूर्यो भवति। यदि रविः कर्कटादिराशित्रयगतो भवेत्तदा लब्धचापं षड्राशिभ्यो विशोध्य शेषतुल्याो रविर्भवति। तुलादित्रये गतवति सूर्ये षड्राशिसहितात् पूर्वागतचापाद् रविर्भवति। मकरादिराशित्रये स्थिते रवौ लब्धचापं द्वादशराशिभ्यो विशोध्य शेषतुल्यो मध्याह्नकालिकः सूर्यो भवति।।

अत्र मध्याह्नच्छायावशाद् रविज्ञाने किं विज्ञानमिति वासनावलोकनात् स्पष्टत्वं याति। तद्यथा -

मध्याह्ने याम्योत्तरवृत्ते खस्वस्तिकाद् रविर्यावदन्तिरितो भवति ते नतांशा उत्तरा दक्षिणा वा भवन्ति। परमक्षांशास्तु सदा दक्षिणा एव कल्पिता[13] । अत्र यदि मध्यच्छायातो नतांशा दक्षिणास्तदा तयोरन्तरेण, यदि उत्तरास्तदा तयोर्योगेन सूर्यान्नाडीवृत्तावधि याम्योत्तरवृत्ते सूर्यस्य क्रान्त्यंशा भवन्ति। ततोऽनुपातः - यदि परमक्रान्तिज्यया त्रिज्या लभ्यते

$$\text{तदेष्टक्रान्तिज्यया किमिति स्फुटार्कभुजज्या} = \frac{\text{त्रिज्या इष्टक्रान्तिज्या}}{\text{परमक्रान्तिज्या}}$$

एतच्चापं मेषादिराशित्रयगतः स्फुटोऽर्कः स्यादेव। कर्क्यादौ द्वितीयपदत्वादैष्यचापस्य भुजत्वाच्चक्रार्धतः शोधनेन, तुलादौ तृतीयपदत्वाद् गतचापस्य भुजत्वाद् भार्धयोजनेन,

मकरादौ चतुर्थपदत्वाद् भगणाद् विशोधनेन सायनमेषादितो राश्यादिकः स्पष्टः सूर्यो भवितुमर्हति। यतो हि सायनमेषादित एव क्रान्तिरुत्पद्यते। एवं समागते सायनसूर्ये अयनांशस्य विशोधनेन निरयणो मेषादिको फलकथनोपयुक्तो रविर्भवतीत्यनुक्तमपि ज्ञेयम्।

वस्तुतो ज्योतिषशास्त्रीयं मध्याह्नच्छायातो रविज्ञानविषयकच्छायाविज्ञानमेतदपि नूनमेव प्राच्यानां बुद्धिवैलक्षण्यद्योतकमेवेति।।

## (6) दिग्ज्ञाने छायागणितम् -

नाविदितं विज्ञैर्यन्निखिलेष्वपि यज्ञादिश्रौतस्मार्तकर्मसु कुण्डमण्डपादीनां निर्माणे पूर्वापरादिदिशां ज्ञानं नितान्तमावश्यकम्भवति। अर्थात् प्राच्यादीनां दिशां ज्ञानं विधाय तदनुसारमेव कुण्डमण्डपादीनां निर्माणं विधेयमिति शास्त्रादेशः। यथोक्तमपि ज्योतिर्निबन्धे[14] -

**प्रासादे सदनेऽलिन्दे द्वारे कुण्डे विशेषतः।**
**दिङ्मूढे कुलनाशः स्यात्तस्मात्संशोधयेद्दिशः।।** इति।।

एवमेव वास्तुरत्नावल्याम् [15] -

**प्रथमे सुसमे क्षेत्रे प्राचीं संसाधयेत्सुधीः।**
**सिद्धान्तोक्तप्रकारेण ततो निष्पादयेद् गृहम्।।** इति।।

एवं हि गृहोद्यानजलाशयादिनिर्माणे विश्वभ्रमणे च दिग्ज्ञानं परमावश्यकं भवत्येव, ग्रहाणामाकाशीयस्पष्टस्थितिं विज्ञाय नलिकावेधेन प्रत्यक्षं ग्रहावलोकनार्थमपि दिग्ज्ञानमावश्यकं भवति। इदमेव कारणं यदत्र ज्यौतिषशास्त्रे प्रायो निखिलैरप्याचार्यैर्दिग्ज्ञानं प्रतिपादितमेव स्व-स्वग्रन्थेषु।

एवंविधमहोपयोगिदिग्ज्ञानसाधनेऽपि च्छायागणितं विशेषेण प्रामुख्यं भजते प्रायो निखिलेष्वपि सिद्धान्तग्रन्थेषु। अर्थादत्र ज्यौतिषशास्त्रे दिग्ज्ञानक्रमे द्वादशाङ्गुलशङ्कोश्छायैव मुख्यभूतेतिभावः। यथा सिद्धान्तशिरोमणौ [16] -

**वृत्तेऽम्भः सुसमीकृतक्षितिगते केन्द्रस्थशङ्कोः क्रमाद्**
**भागं यत्र विशत्यपैति च यतस्तत्रापरैन्द्र्यौ दिशौ।**
**तत्कालापमजीवयोस्तु विवराद् भाकर्णमित्याहता-**
**ल्लम्बज्याप्तमिताङ्गुलैरयनदिश्यैन्द्री स्फुटा चालिता।।**

**तन्मत्स्यादथ याम्यसौम्यककुभौ सौम्या ध्रुवे वा भवे-**
**देकस्मादपि भाग्रतो भुजमितां कोटीमितां शङ्कुतः।**

**न्यस्येद्यष्टमृजुं तथा भुवि यथा यष्ट्यग्रयोः संयुतिः**
**कोटिः प्राच्यपरा भवेदिति कृते बाहुश्च याम्योत्तरा।।** इति।।

अर्थाज्जलवत्समीकृतायां भूमाविष्टप्रमाणं वृत्तं विलिख्य, तस्य केन्द्रे द्वादशाङ्गुलशङ्कुं संस्थाप्य, तस्य शङ्कोश्छाया तस्मिन् वृत्ते यत्र प्रविशति पूर्वाह्णे, अपराह्णे यत्र निर्गच्छति, तत्र पश्चिमपूर्वदिशौ भवतः। यस्मिन् काले छायाप्रवेशो जातः, यस्मिन् काले छायानिर्गमस्तत्कालिकयोः क्रान्तिज्ये साध्ये। तयोरन्तरात्तस्याश्छायायाः कर्णगुणाल्लम्बज्या–भक्ताद्यल्लब्धमङ्गुलादिकं फलं तेनैन्द्रीदिगुत्तरतश्चालिता स्फुटा भवतीति यद्युत्तरेऽयने वर्तते। यदि दक्षिणेऽयने तदा दक्षिणतः, एवं स्फुटा प्राची पश्चिमेति। अथ च प्राचीपश्चिमबिन्दुद्वयमध्ये मत्स्येन दक्षिणोत्तरा रेखा कार्या। सा रेखा वृत्तकेन्द्रगतत्वाद्वृत्ते यत्र स्थानद्वये लगति ते वास्तव दक्षिणोत्तरदिशौ भवतः। पुनः याम्योत्तरदिशोर्मध्ये मत्स्येन वास्तवा पूर्वपश्चिमा रेखा विधेया। एवं चतुर्दिग्ज्ञानं कृत्वा पूर्ववत् पुनः पूर्वोत्तरदिशोर्मध्ये मत्स्येनैशाननैर्ऋतिविदिशौ साध्ये तथा पूर्वदक्षिणदिशोर्मध्ये मत्स्येनाग्निवायुविदिशौ च साध्ये। एवं स्फुटा अष्टौ दिशो भवन्ति।

एवं हि पूर्वाचार्यैः प्रायो निखिलेष्वपि सिद्धान्तज्यौतिषग्रन्थेषु[17] च्छायाद्वारा दिग्ज्ञानसाधनं प्रतिपादितमेव। एतेन स्पष्टं वक्तुं शक्यते यदार्याणां दिग्ज्ञानजन्यं छायागणितीयं विज्ञानमपि विकसितमासीदिति।।

## (7) ग्रहणे छायागणितम् –

अस्मिन् खलु जगति को न परिचितोऽस्ति सूर्यग्रहणेन चन्द्रग्रहणेन वा? मन्ये सर्व एव परिचिता एव। पूर्वाभिमुखं व्रजन्तश्चन्द्रो यदा पूर्णान्ते भूभायां प्रविशति तदा चन्द्रग्रहणं जायते तथा स एव चन्द्रो यदाऽमान्ते सूर्यमाच्छादयति तदा सूर्यग्रहणं जायते। अर्थाच्चन्द्रग्रहणस्य भूभैव (पृथिव्याश्छायैव) कारणभूता।

अतोऽत्रापि स्पष्टं यच्चन्द्रग्रहणगणितसाधनेऽपि च्छायागणितमेव मुख्यमिति। तत्र चन्द्रग्रहणे भूभासाधनम्, ग्रासानयनम्, स्थितिविमर्दार्धज्ञानम्, स्पर्शमोक्षमध्यग्रहणकालज्ञानम् सर्वमपि च्छायागणितमूलकमेव। तथा चैतत्सर्वमपि च्छायाधारितं ग्रासादिकं सत्यमपि घटते, ग्रहणस्य स्पर्शमोक्षादीनां प्रत्यक्षदर्शनात्। तत्रावलोकनीयाः केचनांशाः। यथा भूभासाधनम् सिद्धान्तशिरोमणौ[18] –

**भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम्**
**भूविस्तृतिर्लब्धफलेन हीना भवेत् कुभाविस्तृतिरिन्दुमार्गे।।** इति।।

अर्थाद्रविबिम्बं भूव्यासेन हीनं कृत्वा इन्दुकर्णेन स्फुटेन योजनात्मकेन संगुण्य रविकर्णेन स्फुटेन भजेत्। फलेन भूव्यासो वर्जितश्चन्द्रकक्षायां भूभाव्यासो भवति। अस्यामेव भूभायां प्रविष्टे चन्द्रे चन्द्रग्रहणं जायते। उक्तमपि सूर्यसिद्धान्ते [19] –

**छादको भास्करस्येन्दुरधःस्थो घनवद् भवेत्।**
**भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ।।** इति।।

यदा खलु भूभातुल्यो चन्द्रपातो भवति तदा चन्द्रग्रहणमथवा भूभातः कियद्भिरंशैरूनोऽधिको वा यदा चन्द्रपातो भवति तदा ग्रहणम् सम्भाव्यते। यथा तत्रैव सूर्यसिद्धान्ते [20] –

**भनोर्भार्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि वा।**
**शशाङ्कपाते ग्रहणं कियद्भागाधिकोनके।।** इति।।

अथ ग्रासानयनम् सूर्यसिद्धान्ते [21] –

**तात्कालिकेन्दुविक्षेपं छाद्यच्छादकमानयोः।**
**योगार्धात् प्रोज्झ्य यच्छेषं तावच्छन्नं तदुच्यते।।**

**ग्राह्यमानाधिके तस्मिन् सकलं न्यूनमन्यथा।**
**योगार्धादधिके न स्याद् विक्षेपे ग्राससम्भवः।।** इति।।

अर्थात् पर्वघट्यन्तकालिकं चन्द्रशरं, चन्द्रग्रहणे चन्द्रभूभयोः सूर्यग्रहणे सूर्यचन्द्रबिम्बयोः योगार्धात् विशोध्य यच्छेषं तद् ग्रासमानं भवति। तत्र ग्राह्यमानाधिके सति अर्थाच्चन्द्रग्रहणे चन्द्रबिम्बाधिके सति तथा सूर्यग्रहणे सूर्यबिम्बाधिके सति सर्वग्रहणं भवति, अन्यथा (ग्राह्यबिम्बतोऽल्पे छन्ने सति) अल्पग्रहणं जायते।।

एवमुपर्युक्तग्रहगणविषयकविवेचनयाऽपि स्पष्टमेव यत् प्राच्यानां ग्रहणविषयकं छायागणितमपि नितरां वैज्ञानिकमेव। यतो हि भूस्थितेनैव जनेन सुदूरस्थितस्याकाशीयग्रहणस्य स्पर्शमोक्षग्रासादिज्ञानं नहि सामान्यं विज्ञानमिति।

एवं नात्र सन्देहो यत् प्राच्यानां ज्यौतिषशास्त्रीयं छायाविज्ञानं विलक्षणं प्रशंसनार्हमनुसन्धेयञ्चेति दिक्।।

---

1. ग्रहलाघवं करणम् 2. 5,
2. ग्रहलाघवं करणम् 4.1,
3. सूर्यसिद्धान्तः 3.46–48,

4. सूर्यसिद्धान्तः 3.12,
5. गोलपरिभाषा, लेखकः- हंसधरझाः, श्लो0 168+1/2
6. सिद्धान्तशिरोमणिः, त्रिप्रश्नाधिकारः, श्लो0 13,
7. गोलपरिभाषा, लेखकः -डा0 हंसधरझाः, श्लो0 169-172,
8. सूर्यसिद्धान्तः,3.13,
9. सूर्यसिद्धान्तः, 3.14-16+1/2
10. ''लिप्तास्तत्वयमैर्भक्ता.........स्यात्क्रमज्याविधिरियम् ''।। (सूर्यसिद्धान्तः, 2.31-32)
11. ''ज्यां प्रोज्झ्य...........संयोज्य धनुरुच्यते''।। (सूर्यसिद्धान्तः, 2.33)
12. सूर्यसिद्धान्तः, 3.17-19
13. सूर्यसिद्धान्तः, 3.14
14. वास्तुरत्नाकरः, 2.1,
15. वास्तुरत्नावली, दिग्ज्ञानाध्यायः, श्लो0 2,
16. सिद्धान्तशिरोमणिः, त्रिप्रश्नाधिकारः, श्लो0 8-9
17. सूर्यसिद्धान्तः, 3.1-4, ग्रहलाघवम्, 4.21, शिष्यधीवृद्धिदम्, त्रिप्रश्नाधिकारः, श्लो0 1, इत्यादि।
18. सिद्धान्तशिरोमणिः, चन्द्रग्रहणाधिकारः, श्लो0 6,
19. सूर्यसिद्धान्तः, 4.9,
20. सूर्यसिद्धान्तः, 4.6,
21. सूर्यसिद्धान्तः, 4.10-11,

# कर्तृस्वरूपविमर्शः

## ( भवानन्दतर्कवागीशकृत-कारकचक्रदृष्ट्या )

हरेरामत्रिपाठी

कर्तृस्वरूपं विमृश्यतेऽत्र निबन्धे। क्रियाश्रयत्वं, कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोज्यत्वम्, अनुकूलकृतिमत्त्वमिति त्रेधा कर्तृलक्षणं प्रस्तुत्य, तृतीयं लक्षणं सिद्धान्तत्वेन स्थाप्यते। अन्ते च भवानन्दोक्तदिशा कार्यत्वानवच्छिन्नजन्यतानिरूपितासाधारणानुकूलकृतिमत्त्वं कर्तृत्वमिति व्यवस्थाप्यते। एतस्य अङ्गीकारे ईश्वरेऽपि नातिव्याप्तिः इति सिद्धान्तितम्।

एकद्वित्र्यादिविशिष्टार्थशक्तिमान् प्रत्ययो विभक्तिरिति। यद्वा यः शब्दः स्वार्थे धर्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति समर्थः सा सुबादिविभक्ति इत्युच्यते। वा प्रत्ययार्थधर्मिककृत्यर्थविधेयकान्वयबोधसमर्थः शब्दो विभक्तिरिति। तत्र सुब्विभक्तिः प्रथमादिभेदेन सप्तधा। प्रथमाविभक्तिस्तु यादृशानुपूर्व्यवच्छिन्ननामोपस्थाप्यत्वं विशेष्यतासम्बन्धेन धात्वर्थावच्छिन्नतिङर्थप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धेन प्रयोजकं तादृशानुपूर्वीमच्छब्दत्वमिति। यथा 'चैत्रः गच्छती'त्यत्र चैत्रानुपूर्व्यवच्छिन्ननामोस्थाप्यत्वं विशेष्यतासम्बन्धेन धात्वर्थगमनावच्छिन्नतिङर्थकृतिप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धं प्रयोजकं तादृशचैत्रस्वरूपानुपूर्वीमच्छब्दत्वं प्रथमेति। गोकुलनाथोपाध्यैरुच्यम्–

**विभक्तिः प्रथमा तेषु स्वौजसः प्रत्ययास्त्रयः।**
**आभिमुख्यं तदर्थस्तदभीष्टप्रत्ययात्मकम्।।**[१]

महर्षिणा पाणिनिना उक्तम्–

**प्रातिपदिकार्थलिङ्गपरिमाणमात्रे प्रथमा**[२]

अत्र भट्टोजीदीक्षित आह – नियतोपस्थितिकः प्रातिपदिकार्थः, मात्रशब्दस्य प्रत्येकं योगः। प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात्।

पदं पदं प्रति इत्यर्थेऽव्ययीभावः। पदपदञ्चात्र प्रातिपदिकसंज्ञानिष्ठविधेयता निरूपितोद्देश्यतावच्छेदकधर्मवत्परम्। उद्देश्यतावच्छेदकधर्मश्च धातुप्रत्ययप्रत्ययान्त-भिन्नार्थवत्त्व-कृदन्ततदादित्वतद्धितान्ततदादित्व-समासत्वैतदन्यतमरूपः। तथाच प्रतिपदमुद्देश्यतया लब्धुमर्हति यत्तत्प्रातिपदिकम्। अर्थ्यते=बुध्यते इत्यर्थः, प्रातिपदिकस्य अर्थः इति प्रातिपदिकार्थः अर्थात् प्रातिपदिकजन्यबोधविषय इति। प्रातिपदिकस्य लिङ्गं संख्या चार्थः। प्रातिपदिकनिष्ठशक्तिविशिष्टत्वं प्रातिपदिकार्थत्वम्। वैशिष्ट्यञ्च स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्व-स्वविशिष्टत्वैतदुभय-सम्बन्धेन, सम्बन्धघटकशक्तिवैशिष्ट्यञ्च स्वप्रयोज्यधर्मितानिरूपितापदार्थसम्बन्धाव-च्छिन्नप्रकारतावत्त्व-स्वविशिष्टावच्छेदकतावदविषयतवत्त्वैतदुभयसम्बन्धावच्छिन्न-प्रतियोगिताकस्वाभाववत्त्वस्वप्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविषयत्वैतदुभयसम्बन्धेन।

सूत्रे मात्रशब्दः अवधारणे। अवधारणञ्चान्ययोगव्यवच्छेदः। तथाचोक्तार्थे प्रथमाविभक्तिर्भवति। उक्ते कर्तरि प्रथमाविभक्तिर्भवतीति। तत्र जिज्ञासा जायते कः कर्त्ता? उच्यते पाणिनिना–

**स्वतन्त्रः कर्त्ता**[३]

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्त्ता स्यात् इति भट्टोजीदीक्षितः। स्वम्=आत्मा तन्त्रम्=प्रधानमस्य इति स्वतन्त्रः।

स्वतन्त्रस्य पञ्च नामानि अधोलिखितानि सन्ति। "स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः"।[४] स्वतन्त्रघटकतन्त्रशब्दार्थः इत्थं वदन्ति सभापतिशर्मोपाध्यायाः। तननं तन्त्रम्[५], तन्यतेऽनेन वा तन्त्रम्। तन्त्रणं तन्त्र्यते वा तन्त्रम्। एवञ्च अन्यानधीनत्वरूपप्रधानार्थकस्वतन्त्रशब्दः। अत्र कारकाधिकारात् क्रियाजनने स्वतन्त्रः। उक्तवाक्यस्य तात्पर्यमिदं विद्यते कर्मादिकारकाणां क्रियाजनने न स्वातन्त्र्यम्, कर्तृव्यापारतन्त्रत्वात् देवदत्तः तण्डुलं पचति इत्यत्र देवदत्तः फूत्कारादिव्यापारं विधत्ते तदैव "समवायेन विक्लितिं प्रति तादात्म्येन तण्डुलः कारणं भवति इति चैत्रव्यापारजन्यायां पच्धात्वर्थविक्लितौ ज्ञानविषयीभवनमेव व्यापारः इति कर्मकारकनिष्ठाक्रियायाः पारतन्त्र्यम्। एवं करणं, सम्प्रदानमपादनमधिकरणनिष्ठा-क्रियायाः पारतन्त्र्यं बोध्यमिति। स्वार्थकारकाप्रयोज्यं यत्स्वार्थनिरूपितकारकत्वं

तदाश्रयत्वसम्बन्धेन धातुविशिष्टः।[६] कारकमात्रवृत्तिक्रियाजनकत्वस्वरूपकारकत्वस्य कर्तृरूपतथाविधकारकप्रयोज्यत्वमिति। नागेशमते स्वातन्त्र्यञ्च[७] कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वमिति। सभापतिशर्मोपाध्यायनये कर्तृत्वस्य लक्षणन्तु–

"धातुनिष्ठशक्तिविशिष्टार्थाश्रयत्वम्[८], अर्थे शक्तिविशिष्ट्यञ्च स्वज्ञान-प्रयोज्यशाब्दबोधीयानुकूलत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नप्रतियोगिता-काभाववत्त्व-स्वज्ञानीयविषयताश्रयत्वैतदुभयसम्बन्धेन। प्रतियोगिता च स्वाश्रयत्व-स्वावच्छेदकताश्रयत्वान्यतरसम्बन्धावच्छिन्ना ग्राह्या। पञ्चोलीमते कर्त्ता त्रिविधः।[९] शुद्धः प्रयोजको हेतुः कर्मकर्ता च। 'मया हरिः सेव्यते' इत्यत्र शुद्धकर्ता वर्तते। 'कार्यते हरिणा' इत्यत्र प्रयोजको हेतुः कर्ता वर्तते। 'गमयति कृष्णं गोकुलम्' इत्यत्र कर्मकर्ता वर्तते। शुद्धत्वं नाम हेतुत्वानाश्रयत्वे सति सामानाधिकरण्येन कर्मत्वविशिष्ट-कर्तृत्वानधिकरणत्वे सति सामानाधिकरण्येन कर्मत्वविशिष्टकर्तृत्वानधिकरणत्वरूपमिति। कर्तृकारकस्य स्वरूपं प्रतिपादयन्नाह जगदीशः–

**तिङा विकरणात्तस्य धातोरर्थस्तु यादृशः।**
**स्वार्थे यादृशि बोध्यस्तत् कर्तृत्वं तदिहोच्यते।।**[१०]

सविकरणेन यद्धातुनोपस्थाप्यो यादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्य यादृशार्थेऽनु-भावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वं कारकमिति। तत्तत्क्रियानु-कूलकृतिमत्त्वं[११] तत्तत् क्रियाकर्तृत्वम् अनुकूलकृतिमत्त्वं वा कर्तृत्वमिति। व्याकरणदृष्ट्या क्रियायाः निष्पत्तेः यः स्वतन्त्रो भवति स च कर्त्ता इति। स्वतन्त्रशब्दस्यार्थ-प्रधानमिति पतञ्जलिः। काशिकाकारोऽपि वदति "स्वतन्त्रः इति प्रधानभूत उच्यते। अगुणभूतो यः क्रियासिद्धौ स्वातन्त्र्येण विवक्ष्यते तत्कारकं कर्तृसंज्ञं भवित।"[१२] पुरुषोत्तमदेवः, भट्टोजिदीक्षितश्च उक्तलक्षणस्यैव समर्थनं कुरुतः। यः कर्ता कञ्चिदन्यं कर्तारं क्रियायां प्रवृत्तं करोति स च प्रयोजककर्त्ता इति पाणिनिः। यथा– देवदत्तः ग्रामं चैत्रं गमयति। अत्र देवदत्तः चैत्रं ग्रामं नेतुं प्रेरयति। अत एव देवदत्तः प्रयोजककर्ता इति। यस्मिन् कारके क्रियायाः निष्पत्तौ स्वातन्त्र्यं वर्तते स च कर्त्तेति वैयाकरणाः वदन्ति। अर्वाचीनवैयाकरणा स्वातन्त्र्यस्य स्वरूपं परिष्कृतवन्तः। भट्टोजिदीक्षितानुसारं "प्रधानीभूतधात्वर्थं प्रति आश्रयत्वं स्वातन्त्र्यम्"।[१३] यथा देवदत्तो गच्छति इत्यत्र गम्–धातोरर्थः उत्तरदेशसंयोगानुकूलव्यापारः, तदाश्रयः देवदत्तः। अतः गमनक्रियायां देवदत्तस्य स्वातन्त्र्यात् तस्य कर्तृसंज्ञा भवति। कर्मवाच्यस्थले अस्य लक्षणस्य सदोषत्वं दुर्वारैवेति। कर्मवाच्यस्थले धातोः प्रधानमर्थः न व्यापार

अपितु फलमिति। यथा "यज्ञदत्तेन पक्वस्तण्डुलः" अत्र धात्वर्थः विक्लितिः। विक्लित्याश्रयत्वात् तण्डुलस्यात्र कर्मसंज्ञा भवति। धात्वर्थाश्रयत्वात् तण्डुले कर्तृलक्षणस्यातिव्याप्तिः सम्भवति। वैयाकरणसिद्धान्तकौमुद्याः टीकाकारः वासुदेवदीक्षितः, कौण्डभट्टश्चापि उक्तलक्षणमेव स्वीकृतवन्तौ। नागेशभट्टस्तु "कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यमिति[१४] उक्तवान्। अर्थात् कर्तृप्रत्यययुक्तस्य तिङन्तपदस्य प्रयोगस्थले धात्वर्थाश्रयत्वमेव स्वातन्त्र्यमिति। यथा– 'देवदत्तः तण्डुलं पचति' इत्यत्र कर्तृवाच्यस्य प्रयोगस्थले पच्धात्वर्थः विक्लित्तिजनकव्यापारः तस्याश्रयः देवदत्त इति। अत्र पच्-धातुतः कर्तरि शप्विकरणसहित-तिप्प्रत्ययो भवति। अतः पाकक्रियायां स्वतन्त्रो देवदत्तो वर्तत इति। 'देवदत्तेन तण्डुलः पच्यत' इत्यत्र कर्मवाच्यस्थले पच्धात्वर्थः व्यापारजन्यविक्लितः तदाश्रयः तण्डुलः। अत्र पच्-धातूत्तरकर्मवाच्ये यगा सह त-प्रत्ययो वर्तते। अतः पच्-धातुना सह कर्तृप्रत्ययस्याभावात् धात्वर्थाश्रयस्य तण्डुलस्य स्वतन्त्राभावात् न कर्तृसंज्ञेति। वैयाकरणानां नये विवक्षाधीनानि कारकाणि भवन्ति। अत एव सभापतिशर्मोपाध्याय आह–

विवक्षाधीनत्वं कारकाणाम् 'स्थाली पचति' 'स्थाल्या पचति' "स्थाल्यां पचति" इति प्रयोगदर्शनात्।[१५]

**धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यत।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः।।[१६]**

कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कञ्च न नियतं किन्तु वैवक्षिकम्। अत एव धात्वर्थव्यापाराश्रयत्वेन विवक्षितः कर्ता। यद्धातूपात्तक्रियायां यदा यस्य स्वातन्त्र्यं विवक्ष्यते तदा तत्क्रियायां स कर्त्तेति।

तथा च यस्मिन् कारके क्रियायाः निष्पत्तिं प्रति स्वातन्त्र्यं वर्तते तस्यैव कर्तृसंज्ञा भवति। कारकचक्रे भवानन्दतर्कवागीशेन लक्षणत्रयं निरूपितम्। तत्राद्य लक्षणद्वयं पूर्वपक्षरूपेणोद्धृतं तृतीयञ्च लक्षणं सिद्धान्तभूतमिति। तानि लक्षणानि निम्नोक्तानि सन्ति।

१. क्रियाश्रयत्वम् कर्तृत्वम्।[१७]
२. कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्तृत्वम्।[१८]
३. अनुकूलकृतिमत्त्वम् कर्तृत्वम्।[१९]

क्रियाश्रयत्वं कर्तृत्वमित्यत्र यस्मिन् कारके क्रिया आश्रितत्वेन तिष्ठति स च कर्त्तेति। इदं लक्षणं वैयाकरणाः स्वीकुर्वन्तीति भवानन्दः स्वीकरोति। कारकचक्रस्य पाण्डुलिपौ[२०] एका टिप्पणी विद्यते। तेन ज्ञातं भवति यद् वैयाकरणः कर्त्तृपदं यौगिकं स्वीकरोति इति केचन वदन्ति। तस्मिन् मते कृधात्वर्थः क्रिया वा व्यापारः। नागेशमते उत्पत्तिस्वरूपफलाश्रयेन[२१] भिन्नाश्रयवती क्रिया कृधात्वर्थः वा उत्पत्त्यनुकूल-व्यापार इति।

नागेशमते कर्तृवाच्ये कर्मवाच्ये वा यः कृत्प्रत्ययो भवति तस्यार्थः आश्रयत्वमिति। तथा च कृ-धातुतः तृच्-प्रत्यययोगे सति निष्पन्नोऽयं कर्तृपदं क्रियाश्रयार्थकमिति। अस्य मतस्योल्लेखं कुर्वन्नाह जयरामः–

वैयाकरणास्तु "अनभिहिते कर्तरि" इत्यनुशासनादचेतनेऽपि कर्तृपदप्रयोगात् क्रियाश्रयत्वमेव कर्तृत्वम्।[२२] अर्वाचीनवैयाकरणास्तु कर्तुः स्वरूपमनेन रूपेण प्रतिपादितवन्त इति।

(क) धातूपात्तव्यापाराश्रयः कर्त्ता।[२३]

(ख) व्यापाराश्रयः कर्त्ता।[२४]

(ग) प्रकृतधातुवाच्यव्यापाराश्रयत्वं कर्तृत्वमिति।[२५]

क्रियाश्रयत्वं कर्तृत्वमित्यत्र कालेऽतिव्याप्तिस्सम्भवति। यतोहि "जगतामाश्रयः कालः तर्हि क्रियाया अपि आश्रयः काल इति। उक्तातिव्याप्तिवारणाय कविराजदूषेण उक्तलक्षणे प्राधान्येनेत्यस्य निवेशो क्रियते। तथाच धात्वर्थस्य व्यापारस्य मुख्यरूपेण यः आश्रयो भवति स च कर्ता इति। एवञ्च 'रामः गच्छति' इत्यत्र गम्धात्वर्थस्य गमनस्य वा उत्तरदेशसंयोगानुकूलव्यापार मुख्याश्रयः राम एव वर्तत इति न तु कालः। यथा धात्वर्थस्याश्रयः कर्त्ता भवति, तथैव कर्म अधिकरणञ्च तत्रातिव्याप्तिर्दुर्वारैवेति। 'देवदत्तः तण्डुलं पचती'त्यत्र पाकक्रिया तण्डुलकर्मण्यपि जायते। अतः पाकव्यापाराश्रयत्वात् तण्डुलस्यापि कर्तृत्वं स्यादिति।

एवं 'यज्ञदत्तः विद्यालये पठति' इत्यत्र यज्ञदत्तस्य पठनस्वरूपः व्यापारः विद्यालय एव भवति। तादृशव्यापारस्य आश्रयः विद्यालयस्य सत्त्वात्तत्र भवत्यतिव्याप्तिरिति चेन्न। साक्षात्सम्बन्धेन क्रियाश्रयत्वं कर्तृत्वमिति। अत एव रामतर्कवागीशेनोक्तं साक्षात्क्रियाश्रयत्वं[२७] कर्तुः लक्षणमिति। क्रियाश्रयत्वं कर्तृत्वम् अस्य लक्षणस्य 'चैत्रः गच्छति' इत्यत्र चैत्रे समन्वयेऽपि 'चैत्रः ग्रामं त्यजति' इति प्रयोगकाले त्यागकर्तरि चैत्रे गमनकर्तृत्वापत्तिः तत्तु नेष्टमिति इति चेन्न। यद्धातूत्तराख्यातेन

यगाद्यसमभिव्याहृतेन यद्धात्वर्थान्वितयादृशधर्मवत्वं बोध्यते, तादृशधर्मवत्त्वमेव, तत्क्रियाकर्तृत्वम्।[२७] अर्थात् धातुतः यत्र यगादिप्रत्ययो न भवति शपादियुक्तः तिङ्प्रत्ययो जायते तत्र तिङा कर्तृत्वं बोध्यते। कर्तृत्वन्तु व्यापारे अनुकूलत्वसम्बन्धेन प्रथमान्तपदस्य प्रकृत्यर्थे च आश्रयत्वसम्बन्धेन चान्वयो भवति। पृथग्-पृथग् धातूनां पृथगर्थत्वात् तत्तद्धात्वर्थेषु अन्वितानि कर्तृत्वानि पृथग् पृथगेव भवन्ति। यथा 'रामः गच्छति' इत्यत्र गम्धात्वर्थः उत्तरदेशसंयोगजनकव्यापारे कर्तृत्वमन्वेति। रामः ग्रामं त्यजतीत्यत्र कर्तृत्वं विभागजनकव्यापारेऽन्वेति। वैयाकरणानां नये तु एकत्वाश्रयरामकर्तृकं वर्तमानकालिकं गमनमिति बोधः। एवञ्च एकत्वाश्रयनरामकर्तृकग्रामकर्मक पूर्वदेशविभागजनकः व्यापार इति बोधो च जायते। तत्तत्क्रियाश्रयत्वं कर्तृत्वमिति लक्षणस्य घटं जानातीत्यादौ लक्षणसमन्वयेऽपि 'देवदत्तः तण्डुलं पचति', 'घटो नश्यति' इत्यादौ[२८] कर्तरि देवदत्तघटादौ पाकनाशाश्रयत्वाभावादव्याप्तिरेव। एवं विक्लित्याश्रये तण्डुले नाशाश्रये कपाले चातिव्याप्तिरिति केचित् वदन्ति। तन्न, क्रियाभेदेन कर्तृस्वरूपस्य भिन्नतया पाकादिक्रियास्थले अनुकूलव्यापारवत्त्वसम्बन्धेन नाशादिस्थले च प्रतियोगित्व- सम्बन्धेनाव्याप्तिरतिव्याप्तिश्च न सम्भवति।

कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्तृत्वमित्यपि[२९] केचिद् वदन्ति। अत्र सत्यन्तपदस्य प्रयोजनन्तु छेद्यसंयोगादिरूपव्यापारजनके कुठारादावति-व्याप्तिवारणाय। अप्रयोज्यत्वञ्च[३०] फलानुकूलतज्जन्यव्यापारानाश्रयत्वमिति अस्यार्थः तत्क्रियानुकूलस्वभिन्नकारकजन्यव्यापारानाश्रितत्वम्। तथाच स्वभिन्नकारकजन्यतत्का-र्योत्पत्त्यनुकूलव्यापारानाश्रिततत्वे सति स्वभिन्नकारकजन्यतत्क्रियानुकूलव्यापारजनकत्वं कर्तृत्वमिति। यद्वा कर्मत्वाद्यन्यतमशून्यत्वे सति क्रियाकारकत्वं कर्तृत्वमिति यदि यत् तत् पदस्योपादानं क्रियते तदा तत्क्रियाकर्मत्वन्यतमशून्यत्वे सति तत्क्रियाकारकत्वं तत्कर्तृत्वमिति। यदि उच्यते यत्तत्पदयोरनुगतत्वादिदं लक्षणं न साधु तर्हि उच्यते भवानन्दतर्कवागीशेन–

'अनुकूलकृतिमत्त्वं कर्तृत्वमिति'[३१] अथवा तत्क्रियानुकूलकृतिमत्त्वम् तत्क्रियाकर्तृत्वमिति। अर्थात् तत्तत्क्रियानिष्ठविषयतानिरूपितानुकूलत्वविषयतानिरूपित-विषयताविशिष्टकृतिमत्त्वमिति। प्रयोगशून्यतादशायां कर्त्तृत्वव्यवहारो ग्रन्थकृतामिष्टः, तदा समवायसम्बन्धेन[३२] कृतिमत्त्वमेव कर्तृत्वं बोध्यम्। यदि च शरीरादावपि कर्तृत्वव्यवहारो मुख्यः, तदा समवायावच्छेदकताऽन्यतरसम्बन्धेन[३३] तद्वत्त्वं ज्ञेयमिति। अचेतने कर्तृपदप्रयोगस्तु लाक्षणिक इति। न च नान्तरीयककलायपाकस्थले 'कलायं पचति' इति प्रयोगः स्यात् तदनुकूलकृतिमत्त्वादिति वाच्यम्। तत्तद्विषयकत्वेनापि

कृतिर्विशेषणीया। तथा च स्वनिष्ठविषयतानिरूपत्वस्वजनकत्वोभयसम्बन्धेन तत्तत्क्रिया-विशिष्टकृतिमत्त्वं कर्त्तृत्वमिति बोध्यम्।

न च अनुकूलकृतिमत्त्वमित्यत्र कृतिः यत्नः तर्हि काष्ठस्थाल्यादेः अपि कर्तृत्वविवक्षया 'काष्ठं पचति' 'स्थाली पचति' इति प्रयोगो न स्यात्। यतोहि अचेतनादौ यत्नाभावदिति वाच्यम्। "स्वतन्त्रः कर्ता" इत्यत्र स्वतन्त्रपदं पारिभाषिकमिति अत्र गदाधरभट्टाचार्येणोच्यते "स्वतन्त्रत्वञ्च कारकान्तरव्यापारानधीनत्वे सति कारकत्वम्। 'काष्ठं पचती'त्यादौ स्वातन्त्र्यविवक्षया काष्ठादेः कर्तृत्वमिति"[३४]। न चं कारकान्तरव्यापारानधीनकारकत्वरूपं यत् स्वतन्त्रत्वं तादृशस्वतन्त्रत्वरूप-कर्तृत्वबोधकविभक्तीनामचेतनकाष्ठादौ पुरुषाधीनत्वेनोक्तस्वतन्त्रत्वस्यापि असम्भवादिति वाच्यम् [३५]समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलस्य व्यापारस्यैव तत्क्रियावाचकपदसमभिव्याहृतविभक्त्यर्थत्वात्। 'चैत्रः पचति', 'काष्ठं पचति' इत्यादौ कारकान्तरबोधकपदाभावेन कारकान्तरोपस्थित्यभावात् तेन च कारकान्तरानधीनत्व-प्रतीत्यसम्भवात् तदभावरूपकारकान्तरानधीनत्वप्रतीतेरसम्भवादिति। अत एव तत्र कारकान्तरव्यापारानधीनत्वे सति कारकत्वं स्वतन्त्रत्वमिति बोध्यम्। भवानन्दः कर्तृत्वस्य यल्लक्षणं स्वीकरोति परन्तु मुख्यकर्तृत्वे भेदं दर्शयति। गदाधरेणोच्यते "मुख्यं[३६] च क्रियाकर्तृत्वं न क्रियानुकूलकृतिमात्रम् एकक्रियाविषयककृतितो यत्र नान्तरीयकक्रियान्तरनिर्वाहस्तत्र तत्कृतिमतः तत्क्रियाकर्तृत्वाभावात्, अत एव 'मत्तो भूतं न तु मया कृतम्' इति व्यपदेश इति, किन्तु "तत्क्रियाविषयकत्वे सति तदनुकूला या कृतिस्तदेव तत्कर्तृत्वम्"।[३७] क्रियानुकूलकृतिमात्रस्य मुख्यकर्तृत्व-स्यास्वीकारे कारणमुक्तं गदाधरेण- यत्र कृतिस्तु केवलं गमनक्रियानुकूलैवास्ति अथ च तत्सहावश्यंभाविनः क्रियान्तरस्य परशरीरेऽभिघातस्यापि गमनानुकूलकृत्यैवाभि-घातोऽपि परस्य जातः तत्र तत्कृतिमतरर्थात् गमनानुकूलकृतिमतरभिघातक्रियाकर्तृत्वम् इष्टं नास्तीति हेतोर्न क्रियानुकूलकृतिमात्रं मुख्यं क्रियाकर्तृत्वम्, उक्तस्थले अभिघातक्रियाकर्तृत्वाभावादेव तादृशस्थले 'मत्तो भूतम् न तु मया कृतम्' इति व्यपदिशन्ति, यदि च क्रियानुकूलकृतिमात्रं मुख्यं कर्तृत्वं स्यात्तदोक्तस्थले गमनानुकूलकृत्याप्यभिघाते जाते गमनानुकूलकृतिमतोऽभिघातक्रियाकर्तृत्वमपि स्यादेव कृतिं विनाभिघातस्याप्यसम्भवेनापि अभिघातक्रियोत्पादिकाया गमनानुकूलकृतेः सत्त्वादेव न चैतदिष्टम्। तत्क्रियाविषयकत्वे सति या तत्क्रियानुकूलकृतिः सैव मुख्यं तत्क्रियाकर्तृत्वमिति।[३८] तथा च गमनानुकूलकृतेः उक्तस्थलेऽभिघातक्रियाविषयकत्वं नास्ति गमनकर्तुरभिघाते तात्पर्याभावात् इति नाभिघातक्रियाकर्तृत्वम्। मृगाद्युद्देशेन

बाणप्रक्षेपाद् यत्र ब्राह्मणवधो जातः तत्र बाणप्रक्षेपव्यापारस्य मरणानुकूलत्वम् कृतिविषयत्वञ्च यद्यप्यस्ति तथापि बाणप्रक्षेपस्य ब्राह्मणमरणानुकूलव्यापारत्वेनाभि-प्रायविषयत्वाभावात् ब्राह्मणमरणानुकूलव्यापारत्वेन रूपेण अन्योद्देशेन बाणप्रक्षेपरूपव्यापार-कृतिविषयत्वम् नास्तीति तादृशव्यापारकर्तृः इति न तस्य सम्पूर्णप्रायश्चित्तं भवति। अत एव तत्क्रियाविषयकत्वे सति तत्क्रियानुकूला या कृतिस्तद्वत्त्वमेव मुख्यं कर्तृत्वं वक्तव्यमिति अनुकूलकृतिमत्त्वमित्यत्र अनुकूलपरिष्कारं कुर्वन्नाह भवानन्दः– "कार्यत्वानवच्छिन्नजन्यतानिरूपितमसाधारणमनुकूलत्वमेव वा लक्षणघटकमित्याहुः।"[३९] तथा च कर्तृत्वस्य लक्षणं भवति कार्यत्वानवच्छिन्नजन्यतानिरूपितासाधारणानुकूलकृतिमत्त्वं कर्तृत्वम्।

अस्य कर्तृलक्षणस्य ईश्वरे नातिव्याप्तिस्सम्भवति। उक्तमते अस्वारस्यं द्योतयन्नेव आह भवानन्दसिद्धान्तवागीशः आहुरिति। तथा च प्रतीयते यत् भवानन्दसिद्धान्तवागीशनये "अनुकूलकृतिमत्त्वमेव कर्तृत्वमिति। अत एव 'स च विश्वस्य कर्ता भुवनस्य गोप्ता"[४०] इत्यादिवेदवाक्येषु यत् कर्तृत्वं विद्यते तत्रापि लक्षणसमन्वयात् लक्षणस्य दोषरहितत्वं सम्भवतीति।

---

**पादटिप्पणी**

१. पदवाक्यरत्नाकरः- पृ. सं. ३७१
२. कारकप्रकरणम् २/३/४६ पृ. सं. ७६५
३. अष्टाध्यायी १/४/५४ वैयाकरणसिद्धान्तकौमुदी पृ. ८०३
४. वैयाकरणसिद्धान्तकौमुदी, कारकप्रकरणम्, लक्ष्मीटीका पृ. सं.-८०३
५. तदेव पृ. सं. ८०३
६. तदेव पृ. सं. ८०४
७. तदेव पृ. सं. ८०४
८. तदेव पृ. सं. ८०४
९. वैयाकरणसिद्धान्तकौमुदी, कारकप्रकाणम्, लक्ष्मीटीका पृ. सं. ८०४
१०. शब्दशक्तिप्रकाशिका, कारिका-७५ पृ. सं. ३३७
११. शब्दशक्तिप्रकाशिका, टिप्पणी पृ. सं. ३३७
१२. काशिकावृत्तिः, भागः- १, १/४/५४ पृ. ५८३-८४
१३. प्रौढमनोरमा, तृतीयभागः- पृ. ८७९
१४. लघुशब्देन्दुशेखरः, कारकप्रकरणम्, पृ. ४७६
१५. वैयाकरणसिद्धान्तकौमुदी, भागः-२, कारकप्रकरणम्, पृ. ८०४ (लक्ष्मीटीकासहिता)
१६. तदेव पृ. सं. ८०४
१७. कारकचक्रम् पृ. सं. ७
१८. कारकचक्रम् पृ. सं. १३

१९. तदेव पृ. सं. १५
२०. भवानन्दकृतकारकप्रयोगः, कुरुक्षेत्रविश्वविद्यालयः, पुस्तकालयप्राप्ति सं. १९८७९ पत्र सं. २ इत्यत्र टिप्पणी विद्यते।
२१. कृञ्-उत्पत्तिव्यधिकरणस्तदनुकूलो व्यापारोऽर्थः, परमलघुमञ्जूषा, धात्वर्थनिर्णयः पृ. १५८
२२. कारकचक्रम्, वा. पृ. ९
२३. श. कौ. (भाग-२) १,३,६७ पृ. ८१
२४. वैयाकरण भूषणसार (धा. नि.) का. २ पृ. २२
२५. प. ल. म. (का. नि.) का. २, पृ. २२
२६. मुक्तबोधव्याकरणम्, भागः-१, पुस्तिका ४, सू. सं. २८९, पृ. २९७
२७. कारकचक्रम्, पृ. सं. ९
२८. कारकचक्रम्, माधवीटीका पृ. सं. १०
२९. कारकचक्रम्, पृ. सृ. १३
३०. कारकचक्रम्, पृ. सृ. १३
३१. कारकचक्रम्, पृ. सृ. १५
३२. कारकचक्रम्, माधवीटीका १५
३३. कारकचक्रम्, माधवीटीका १५
३४. व्युत्पत्तिवादः, तृतीयकारकम् पृ. सं. ४००,
३५. तदेव, पृ. सं. ४००
३६. व्युत्पत्तिवादः, पृ. सं. ४०६
३७. व्युत्पत्तिवादः, पृ. सं. ४०६
३८. व्युत्पत्तिवादः
३९. कारकचक्रम्, पृ. सं. १७
४०. मुण्डकोपनिषत्, १.१.१, पृ. १५

# पदपदार्थनिर्वचनम्

सुधाकरमिश्रः

**स्फोटोऽष्टधा निरूप्यते। तत्र पदस्कोटादिषु प्रयुक्तस्य पदपदस्य कोऽर्थः? किमियं संज्ञा? कास्य व्युत्पत्तिः? कथं निष्पन्नोऽयं पदशब्दः? इतीदं सर्वं सूत्र-वार्त्तिक-भाष्याण्युद्धृत्य वाक्यपदीयदिशा विचार्यतेऽत्र प्रबन्धे।**

**यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।**
**तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते॥**

स्फोटमतावलम्बिनः वैयाकरणाः "शब्दब्रह्मेति" स्वीकुर्वन्ति। तस्य शब्दस्य किं स्वरूपमित्यादिविषयः महाभाष्ये पस्पशाह्निके निरूपितमाचार्यपतञ्जलिना। सिद्धान्तभूतस्य स्फोटस्य अष्टधा परिकल्पना विद्यते। वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटश्च, तथा च अखण्डपदस्फोटः, अखण्डवाक्यस्फोटभेदात्। अष्टसु स्फोटेषु मुख्यः वाक्यस्फोटः, यतो हि निराकाङ्क्षार्थबोधकत्वात्। अन्येषां स्फोटानां शास्त्रप्रक्रियानिर्वाहाय परिकल्पना। "तत्रपदपदार्थः कः" इति परिष्क्रयते, पद्यते = गम्यत अर्थोऽनेनेति पदम्। पदगतौ इति धातोः निष्पन्नोऽयं पदशब्दः। पाणिन्यष्टाध्याय्यां महर्षिणा पदम् नाम पदसंज्ञकम्। तच्च पद-संज्ञाविधायकं सूत्रं "सुप्तिङन्तं पदम्[1]", "स्वादिष्वसर्वनामस्थाने[2]", "सिति च[3]" इति लिखितम्। सूत्रत्रयस्य भिन्नं भिन्नं प्रयोजनम्। "सुप्तिङन्तं पदम्" इति सूत्रस्य प्रयोजनं लोके प्रयोगार्हत्वसम्पादनम्। उक्तञ्च भाष्यकारेण "अपदं न प्रयुञ्जीत" अर्थात् अपरिनिष्ठितं न प्रयोक्तव्यमिति। स्वादिष्वसर्वनामस्थाने इति सूत्रस्य फलं जशत्वकुत्वादि, "सिति च" सित्यस्यफलं भसंज्ञाबाधनम्। तथा तत्प्रयुक्तकार्यस्याभावः। पदं-पदं-पदं-वाक्यम्। पद्यते = प्राप्यते = ज्ञायते येन इति पदम्, वाक्यस्यपदमित्यस्य तात्पर्यं भवति वाक्यस्यप्रतिपादकमिति।

आचार्यभर्तृहरिणा ब्रह्मकाण्डे अष्टपदार्थीनिरुपिता।

**अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।**
**अन्वाख्येयाश्च ये शब्दाः ये चापि प्रतिपादकाः॥**
**कार्यकारणभावेन योग्यभावेन च स्थिताः।**
**धर्मे ये प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु॥[4]**

एवं ते शब्दाः द्विविधाः- अन्वाख्येययाः, प्रतिपादकाश्च, अर्था अपि द्विविधाः अपोद्धारपदार्थाः, स्थितलक्षणाश्च। शब्दार्थयोः सम्बन्धा अपि द्विविधाः। कार्यकारणभावरूपाः योग्यभावरूपाश्च, फलमपि द्विविधम्-धर्मः प्रत्ययश्च, यद्यपि वाक्यस्यैव निरंशस्य वाचकत्वादन्तरा पदप्रतिपत्तिर्विभ्रम इति किमसत्येन पदेन व्युत्पादितेनेत्याशङ्क्य पदस्य वाक्येभ्य अपोधृत्य कल्पनया बुद्धया पृथक् पदं निष्कृष्य-

**द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधापि वा।**
**अपोधृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्॥**[५]

कैश्चित् आचार्यैः वाक्येभ्यः पदानि अपोधृत्यैव-कल्पनया पृथक्कृत्यैव न तु वस्तुस्थितिमनुरुध्य पदं द्विधा इति। कैश्चित् चतुर्धा कैश्चित् पञ्चधापि।

द्विधा कैश्चित् पदं भिन्नम्-नामाख्यातभेदेन पदं द्विधा इति। नामपदेन सुबन्तं, नमत्याख्यातार्थं प्रतिविशेषणीभवतीति नाम, इति व्युत्पत्तेः। आख्यातं = तिङन्तमिति।

चतुर्धा पञ्चधापि वा- ऋग्वेदे वर्णितमस्ति यत्

**चत्वारि शृङ्गा त्रयो अस्य पादा।**
**द्वे शीर्षे सप्त हस्तासो अस्य॥**

**त्रिधा बद्धो वृषभो रोरवीति।**
**महोदेवो मर्त्यां आविवेश॥**[६]

अस्य मन्त्रस्य भाष्यमित्थम्- चत्वारि शृङ्गाणि, चत्वारि पदजातानि नामाख्यातो पसर्गनिपाताश्च। त्रयो अस्य पादाः- त्रयः काला भूतभविष्यद्वर्तमानाः। द्वे शीर्षे शब्दात्मानौ नित्यः कार्यश्च, सप्तहस्तासो अस्य सप्तविभक्तयः, त्रिधाबद्धः- त्रिषु स्थानेषु बद्धः, उरसि कण्ठे शिरसीति, वृषभो वर्षणात्। रोरवीति-शब्दं करोति।

अपर आह-

**चत्वारि वाक्परिमिता पदानि।**
**तानि विदुर्ब्राह्मण ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति।**
**तुरीयं वाचो मनुष्या वदन्ति॥**[७]

चत्वारि वाक्परिमितापदानि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। तानि विदुर्ब्राह्मणा ये मनीषिणः मनस इषिणो-मनीषिणः। गुहायां त्रीणि निहितानि

नेङ्गयन्ति, न चेष्टन्ते न निमिषन्तीत्यर्थः, तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः।

तात्पर्यमिदं यत् नामाख्यातोपसर्गनिपातभेदेनचतुर्धा इति भिन्नम्। नामाख्याते हि साक्षादर्थं वदतः, उपसर्गनिपातौ तु तदर्थगतविशेषद्योतकाविति पृथक्कृतौ, कर्मप्रवचनीयानां तु क्रियाविशेषप्रकाशनादुपसर्गेष्वेवान्तर्भाव इति। वा-अथवा कैश्चित्पदं नामाख्यातोपसर्गनिपात कर्मप्रवचनीयभेदेन पञ्चधापि भिन्नम्। कर्मप्रवचनीयानामुपसर्गवत् साक्षात् क्रिया विशेषप्रकाशकत्वाभावादुपसर्गेष्वन्तर्भावासम्भवात्। तथाहि-"शाकल्यस्य संहितामनु प्रावर्षत्" इत्यत्र संहितानिशमनपूर्वकत्वरूपः प्रवर्षणक्रियागतो विशेषोऽनुना न साक्षाद्द्योत्यते, निशमनक्रियाया अश्रुतत्वात्, किन्तु संहिता प्रवर्षणयोर्हेतुहेतुमद्भावादि-द्योतन पुरस्सरं स द्योत्यत इति न साक्षात् क्रियाविशेषप्रकारकेषूपसर्गेषु तेषामन्तर्भाव इति कर्मप्रवचनीयानामुपसर्गतः पृथक् क्रियाया पञ्चधापि कैश्चिद् पदं कल्पितमिति। प्रकृति प्रत्ययादिवत्। यथा पदवादिनां मते पदार्थेभ्यः शास्त्रीयान्वयव्यतिरेक निमित्तकः प्रकृत्यर्थप्रत्ययार्थादीनामापोद्धारस्तन्निमित्तकश्च प्रकृतिप्रत्ययाद्यापोद्धार इति।

द्विधापदमात्रविशेषः- वाक्यात् पदानामपोद्धरणम्, पदाद्वा प्रकृतिप्रत्ययादी-नामपोद्धरणम्, लौकिकाभ्यां शास्त्रीयाभ्यां वा परिकल्पिताभ्यामन्वयव्यतिरेकाभ्यां सिद्धमिति। "द्विधा कैश्चित्पदं भिन्नम्" इत्यत्र भिन्नं भेदः, सामान्यं व्यापको धर्मः। द्वित्वादिकं तु तस्य विशेषः- व्याप्योधर्मः, द्विधा इत्यादौ विधानार्थे धाप्रत्ययोत्पद्यते। यतः प्रकार एव विधार्थः। प्रकारश्च सामान्यस्य-साधारणधर्मस्य, भेदकः सामानाधिकरण्य सम्बन्धेन स्वंविशेषणीकृत्य व्यावर्तकविशेषः।

प्रकृते च द्वित्वं भेदे सामानाधिकरण्यसम्बन्धेन स्वं विशेषणीकृत्य तं त्रित्वादिसमानाधिकरणाद् भेदाद् व्यावर्तयति। वस्तुतोऽखण्डाद् वाक्यादपोद्धृत्यैव नामाख्यातभेदेन पदं द्विधा स्वीकृतमिति यावत्। उपसर्गकर्मप्रवचनीयानामाख्यात एवान्तर्भावः, क्रियागतविशेषद्योतकत्वात्। निपातानां तु सत्वप्रधानानां-स्वरादीनां नाम्नि, क्रियाप्रधानानां तु हिरुगादीनामाख्यातेऽन्तर्भाव इति भावः।

---

१. पा.सू. १/४/१४
२. पा.सू. १/४/१३
३. पा.सू. १/४/१६
४. वाक्यपदीयम् ब्रह्मकाण्डे २४
५. वाक्यपदीयम् पदकाण्डे १
६. पस्पशाह्निके
७. पस्पशाह्निके

# Observation on the Limitations of *Karma* (Action) in the Shankara Vedanta

Shashi Tiwari

शाङ्करवेदान्ते किं ज्ञानेन मुक्तिरुत कर्मणा इति विचार्य ज्ञानकर्मणोः प्राधान्यं प्रतिपाद्यतेऽत्र लेखे। मोक्षस्तु आत्मसाक्षात्कारेणैवेति निरूप्य कर्मणोऽपि महत्त्वं प्रदर्श्यते। आत्मसाक्षात्कारेणैव प्राप्यमाणो मोक्षः कर्मणापि प्राप्यते। ज्ञानञ्च साक्षादुपकारकं, कर्म चारादुपकारकमिति प्रस्तुत्य उभयोरपि समं महत्त्वं प्रतिष्ठाप्यते शाङ्करमतमनुल्लङ्घ्यास्मिन् प्रस्तावे।

The principal Upanishads constitute the final portion of the Vedas and therefore, are known as 'Vedanta.' Later on, Sanskrit Acharyas utilized major Upanishads for building up one of the most important system of philosophy, namely the Vedanta. So now the word 'Vedanta' has come to mean the philosophy rather than the Upanishads, the source material from which that philosophy is developed. The Upanishads are neither the work of one seer nor they reveal any explicit subject. They are documents exploring the revelation of higher reality intuited by different Vedic seers at different times. These texts describing *Brahmavidya* are interpreted by ancient Indian philosophers variously and thus different philosophical systems are constituted such as *Kevala-advaita, Vishisht-advaita, Dvaita, Shuddh-advaita, Daita-advaita* etc. Among them philosophy of Vedanta enunciated by Adi Shankaracharya (788-820 A.D.) is called' *Kevalaadvaita'* It is also known as *Shankara- Vedanta* due to his immense contribution to Vedanta.

In his life time, Shankara defeated in debate the followers of the path of Buddhism, Shaktism, Shaivism, *Kapalikas* etc. and

established his doctrines of his Advaita Vedanta philosophy. Besides being a philosopher and a debater he was a saint, a poet and a great religious reformer. From that time, Advaita philosophy has influenced Indian religious life to a great extent. In this reference S.N. Dasgupta may be quoted, "So great is the influence of the philosophy propounded by Shankara and elaborated by his illustrious followers that whenever we speak of Vedanta-Philosophy, we mean the philosophy that was propounded by Shankara. If other expositions, are intended, the names of the exponents have to be mentioned, e.g. *Ramanujamata, Vallabhamata,* etc."[1]

### 1. Major Doctrines of Acharya Shankara

Shankaracharya wrote commentaries on *Prasthana-trayi* - Major (eleven) Upanishads, *Brahmasutra* and *Shrimadbhagavadgita* and tried to establish his principles related to *Brahman, Jiva. Maya,* world, life, liberation etc. He propounded the doctrine of identity of Brahman and Atman. Salvation (*Moksha*) or deliverance from the cycle of birth and death is the Vedantic goal of human life. He holds that the world of multiplicity has its being in the non-dual Brahman apart from which it has no independent existence or reality. Shankara accepts perception, inference and scriptural testimony as the sources of valid knowledge. According to him the emancipation or liberation *(Moksha)* is the result of real knowledge of the identity of the Self and Brahman. By knowledge, Shankara means realization of the Self, a rare event, which can take place only when aspirant is most competent. Perception of oneness is knowledge and perception of diversity is not-knowledge. Liberation is merely a discovery of one's non-dual Self. Apparent multiplicity is nothing but result of ignorance. It is sure that only knowledge of Self *(Jnana)* leads to liberation. For this statement there are a number of Upanishadic evidences: 'Without knowledge, there is no salvation.[2]' 'He who knows the Supreme Brahman verily becomes Brahman'.[3] 'When to the knower all beings become one with his own Self, what delusion, what grief can there be when one perceives the unity?'[4] After realizing the highest reality there is no place for lamentation. Thus path of knowledge *(Jnana)* alone is the means for attaining liberation according to Shankara Vedanta. He has emphasized that there can be no state of liberation without real knowledge of Self. Actually supreme knowledge' *Vidya* . is the knowledge of oneness. In other words that is to know the identity of the Self and the Brahman. The seeker has to know that Supreme Brahman who resides in all beings. As

says Upanishad. 'the wise beholds all beings in his own Self and his own Self in all beings; for that reason he does not hate any-one.'[5] All the revulsion arises from seeing some thing different from Self. For a man who all the time sees the Self there is no object which could cause the feeling of revulsion. A man endowed with Self- knowledge remains undisturbed by the outer manifestations of ugliness or beauty, strength or weakness. For the knower multi-plicity is shattered and he is free from pain and pleasure.

According to Shankara in order to obtain this knowledge, one has to acquire four qualifications, namely (1) discrimination between eternal and non-eternal ( *Nilyanitya-vastu- vivek),* (2) non-attachment to the enjoyment of this and the other world ( *lhamutra-phalabhoga-viraga),* (3) six ethical qualifications ( *Shama-damadisadhanasampatti),* and (4) intense desire for liberation ( *Mumuksha).* In his work entitled *'Vivekchudamani'* Shankara has explained these qualities as essential conditions for the seeker of Supreme Truth. He has highlighted that Self-knowledge should be imparted by a *Brahmanishtha* Guru to a tested sincere disciple having these qualities. For a knower attainment of true knowl-edge alone is liberation.

## 2. Importance of Actions (Karma) in Life

All the important scriptures instruct upon actions, espe-cially performance of duties prescribed in the scriptures must be done by human beings. The result of *Karma* or ritualistic perfor-mances is told in Vedic texts as attainment of celestial abodes. As such an attainment is transitory and material, thus practice of *karma* is considered unwise. The *Bhagavadgila* also disapproves Sakama *Karma. Gita* is well known for establishing the principle of action without attachment (Nishkama *Karma- Yoga).*[6] It says, 'You have a right to perform your prescribed duty, but you are not entitled to the fruits of action.' The *Isha Upanishad* in the second verse exhorts, 'By doing *Karma* one should wish to live here for a hundred years.'[7] This means that should one desire to live a hun-dred years then it is only doing the actions like *Agnihotra* etc., enjoined for him. For such a man there is no other mode whereby he is not tainted with evil actions. *Gita* says no one can live with-out doing actions. Even in sleeping state mind remains active. The journey of life cannot be fulfilled without performing actions. *Gita* instructs, 'Perform your prescribed duty, for doing so is better than not working.'[8] Commenting on the second verse of *Isha Upanishad,*

commentator Upannishad-Brahmayogi has written that it is better for an ignorant to perform actions even with desires. The actions are considered necessary requirement for worldly beings in almost every philosophical move.

### 3. Salvation and Knowledge

It is universally accepted in Indian intellectual traditions that freedom of soul is the ultimate goal of mankind. It is known as fourth *Purushartha.* Also, there is no point of difference in realizing that the supreme happiness lies in the liberation of soul, but there are various opinions in regard to the ways of achieving this goal. Even the position and the relation of knowledge and action are looked at from different view-points. Some philosophers advocate knowledge as the sole means of liberation, while others advocate the combination of action and knowledge as the means of it. Similarly, from generations, the way of right living has been a serious question. Is life to be spent in walking the path of renunciation or in striving on the path of action? The Vedic literature covers a wide range of thoughts about it, but *Isha Upanishad's* real excellence lies.in the analysis of the two doctrines, the two ways, i.e. knowledge ( *Jnana)* and action( *Karma).* According to some thinkers who are called *Samuccayavadins,* the *Isha Upanisad* advocates a synthesis of *Karma* and *Jnana* for the attainment of final liberation. But according to some other commentators it describes *Jnana* and *Karma* as two different ways, meant for different types of seekers, for attaining different results.

The seer of the *Isha Upanishad* teaches the way to know the real nature of Brahman and also the way to lead a successful life. For this the great declarations of opening two verses are important. They refer to two disciplines. The first verse shows the path of knowledge and prescribes the discipline of complete renunciation. It states, 'whatever there is changeful in this changing world, all that must be enveloped by the Lord. Protect the Self by renunciation. Do not covet the wealth of anyone.'[9] This profound utterance declares that the whole universe is nothing but the Brahman. He is identical with the Atman. An illumined person regards the whole universe as Atman alone, and so he renounces the worldly objects. The second verse indicates the path of action. It declares, 'For a man, there is no way other than *Karma.* Actions should be performed in a spirit of dedication so that they do not cling to the Self.'[10] This *mantra* says that those who are attached

to earthly life should perform righteous duties in a spirit of dedication. The verse provides the philosophical background of the *Karma-yoga* of Gita. Again in this Upanishad, verses nine to eleven indicate that *Vidya* and *Avidya* are to be taken together for a superior result. 'He who knows *Vidya* and *Avidya* both together crosses death through *Avidya* and attains *Amritam* through *Vidya*'. Most of the commentators take these words in the meaning of knowledge and action respectively in reference to its general usage in Upanishads. However in *Katha Upanishad* we find these terms and a clear hint that both are different to each other, 'That which is known as *Vidya* (knowledge) and that which is known as *Avidya* (ignorance or action) are widely contradictory, and they follow divergent courses.'[11]

### 4. Synthesis of knowledge and Action

The *Jnanakarmasamuccayavadin* philosophers advocating the combination of knowledge and actions, believe that *Isha Upanishad* presents a synthesis of knowledge and action. According to them, the first verse enunciates the concept of knowledge and the basic philosophy of life, 'Know the Supreme Lord, present in all beings as Atman and enjoy the world, but with a feeling of non-attachment'. The second verse enunciates the concept of action and illustrates its importance. 'We must do actions and not refrain from them'. Detachment does not mean inaction. In fact attachment is the cause of pain and suffering. So always perform duties in a spirit of detachment. Thus the Upanishad hints at the combination of knowledge and action. It is not necessary to withdraw from active life to give oneself up to the contemplative. In the opinion of Madhva (*Dvaita* school) and Vedanta Deshika (*Vishishtadvaita* school) even *Jnani* or *Samnyasin* cannot give up action, though of course his action must be without attachment. Uvata and Mahidhara. the commentators of *Yajurveda* (*Isha Upanishad* is fortieth chapter of *Yajurveda)*, point out that verses nine to eleven of this Upanishad state that *Vidya* (knowledge) and *Avidya* (action) are to be taken together by a seeker. Harmonization of these two is suggested here for the attainment of immortality '*Amrita*' or *Moksha*. The verse says, 'Who synthesizes both, crosses death, evil by *Avidya* (action) and enjoys immortality, perfection by *Vidya* (knowledge).'[12] Thus this view point recommends the synthesis of knowledge and action as the means of liberation. It presents the doctrine that a man attains the ultimate goal only by the combined pursuit of religious duties *(Karma)* and spiritual

knowledge *(Jnana)* together. Knowledge without action or action without knowledge cannot lead to salvation.

## 5. Antithesis between Knowledge and Action

According to Shankara's interpretation *Isha Upanishad* refers the concept of knowledge and action very differently. Both the paths are totally different as they lead to different destinations. Knowledge leads to final liberation, while action fulfils material desires. The first verse of the *Isha Upanishad* enunciates to the path of knowledge through renunciation of all desires and the second verse expounds' the path of actions (rituals) for those who are ignorant, desirous of long life on earth and incapable of cultivating devotion to knowledge. In his opinion, these are two ancient paths described in the Vedas. First *mantra* talks about devotion to knowledge for one who can renounce, while the second *mantra* speaks about devotion to performance of action, for one who is unable to renounce. In his commentary, Shankara quotes *Taittiriya Aranyaka* which says that path of renunciation excels.[13] Explaining the verses from nine to eleven of Isha Upanishad, Shankaracharya takes the term *Vidya* in the meaning of 'knowledge of deities' because he is firm that Vidya meaning *Jyana* will be wrong here as *mantra* is taking about the practice of *Vidya* and *Avidya* simultaneously by one person.

In the commentary of *Gita* too we find his same viewpoint. In the introduction there he presents seven points *(yuktis)* to prove that Lord Krishna has told two paths very differently - *Sankhya Budhi* and *Yoga Buddhi.* First is path of knowledge and the second is path of action. They cannot be performed by a person at the same time because they need diverse attitude. Knowledge cannot be combined with action. If Shri Krishna has instructed Arjun to pursuit them jointly, he would have not asked, 'O Krishna! First of all You ask me to renounce work, and then You recommend work with devotion. Now will You kindly tell me definitely which of the two is more beneficial?'[14] In the opinion of Acharya Shakara, there is basic antithesis between *Jnana* and *Karma* since they lead to distinct destinations. Knowledge alone constitutes *Moksha* or liberation. Action by itself cannot lead to ultimate goal to which knowledge leads. The antithesis between knowledge and action is as unshakable as a mountain. These are the two paths serially to be practice - first the path of action and later the path of renunciation. The later involves thc abandonment of the three desires. Of

## ग्रन्थस्य महत्त्वम्।

ग्रन्थेऽस्मिन् गायत्रीमन्त्रविषये शिवस्य वर्णनोद्यमो दृश्यते। अत्र गायत्रीमन्त्रस्य विवरणं सूक्ष्मदृष्ट्या प्रतिपादितम्।

ग्रन्थेऽस्मिन् उक्तं यत् गायत्री प्रकृतिस्वरूपा प्रणवश्च पुरुषरूपः। अनयोः संयोगात् समस्तं जगत् प्रवर्तते। एषा गायत्रीशक्तिः चतुर्वेदमयीत्युच्यते।

प्रणवः शिवः। शिवशक्तिमयं जगदिदम्। अत्र परमेश्वरः शिवः वैचित्र्य-स्वातन्त्र्यस्वभावः विश्वमयशरीरः परास्पन्दविमर्शः प्रकाशादिशब्दवाच्यः अनन्त-शक्तेरधिष्ठाता स्वस्वरूपे वर्तते सर्वोऽयं प्रपंचः अस्यैव शक्तिः।

एषा शक्तिः एकैव सा तु श्री पराशब्दवाच्येति अभिनवगुप्तपादाः। अविकल्प संवित्मात्ररूपतया विभर्ति, पश्यति, भासयति च परमेश्वरः सास्य श्रीपराशक्तिरिति परमेश्वरस्वरूप प्रकाशिका परानन्दात्मकस्वातन्त्र्यशक्त्यपरपर्याया जीवनकलाधिष्ठात्री शिवकलेत्युच्यते। सैव सारतया परमेष्ठिनं हृदयं प्रोक्तम्। सा एव विमर्शक्रिया पराशक्तिरिति। इयं शक्तिः मध्यमा वैखरीरूपेण परिस्पन्दरूपा क्रियाशक्तिरित्युच्यते एवं वागूरूपेण विख्याताशक्तिः शब्दमयी जगन्माता वेदमाता सरस्वती शब्दब्रह्मेत्यादि शब्दैः उच्यते। अस्य ग्रन्थानुसारं इयं परावागेव श्रुतौ गायत्रीत्युच्यते।

एतद्ग्रन्थानुसारं गायत्रीशब्दस्य विग्रहः गायति च त्रायते च या सा गायत्रीति कै गै शब्दे इति धात्वनुसारं गायत्रीवैखरीरूपेण शब्दो भवति। वैचित्र्यपरामर्शकारिस्वभावेन प्रकाशस्वरूपप्रत्यवमर्शेन च आराधकान् रक्षति।

अन्यश्चास्मिन्विषये उक्तं यत् गायन्तं शब्दयन्तं सर्वात्मकोऽहमेवास्मीति अत्र अहमिति सहजस्वभावां पूर्णाहन्तां विमृशन्तं त्रायते।

एतरेय ब्राह्मणे उक्तं "गायान् त्रायते या सा गायत्री" अर्थात् या गायाः प्राणान् रक्षति सा गायत्रीति।

बृहदारण्यके उक्तम् - गायत्री प्रोच्यते तस्माद् गायन्तं त्रायते ततः। गायत्री वस्तुतः स्त्रीरूपा काचित् शरीरधारिणी नास्ति। एषा परब्रह्मणः पराशक्तिः जगतः प्राणान् रक्षति पालयति च। एतदर्थमेव महाप्रकृतिस्वरूपा, आदिशक्तिः आलङ्कारिकरूपेण स्त्रीति संज्ञया अभिहिता। पुरुषापेक्षया नारिषु स्वभावतः ममत्वभावनाऽतिशयेन विराजते। सम्पूर्णेस्मिन् चराचरजगति ममतायाः प्रसारणात् मातृस्वरूपा गायत्री स्त्रीलिङ्गाभिधानेन वोधितः।

मन्त्राराधकं जनं (स्वपरामर्शकारिणं) रक्षपयति। यथोक्तं गीतायां **अनन्याश्चिन्तयन्तो मामित्यादि** स्वसाधकानां योगक्षेमं एषा गायत्री विदधाति।

गायत्री प्राणस्वरूपा शक्तिः प्राणरूपेणावतरति। श्रुत्यनुसारं सैव गायत्री संवित् प्राणे परिणहा प्राणा वै गायास्तां स्तत्रै तस्माद्गायत्रीति।

एषा चमत्काररूपिणी सावित्री ग्राह्यग्राहकनानावैचित्र्यभिन्नं विश्वं सुवति प्रेरयति। सत्पथे अतीव सुष्ठुतया सरति, प्रसरति, शब्दमय श्रुतिस्मृत्यादिरूपेण नानात्वं गच्छति इति सरस्वतीः। सा तुल्यश्चिदेकार्णवस्तन्मयी सरस्वतीति एकस्या एव परमेश्वर्याः पराशक्ते पश्यन्ती मध्यमा वैखरी ज्ञानेच्छाक्रिया गायत्री सावित्री सरस्वतीत्यादि नामभेद एव दृश्यते न तु वस्तुभेदः किञ्चिदपि। ईश्वरः ओंकारः प्रणवशब्दवाच्यत्वेन चायमेव वर्णितः।

गायत्र्याः स्मरणादेव जनाः सर्वपापेभ्यो मुक्ताः भवन्ति। अस्याः जपविषये उक्तं, **अशुचिर्वाशुचिर्वापि गच्छंस्तिष्ठन् यथा तथा। गायत्री प्रजपद्धीमान्, जपात् पापं निकृन्तति।** इयं मननात् पापतस्त्राति, मननात् स्वर्गं मोक्षं चतुर्वर्गफलं चाश्चुते।

ब्रह्माविष्णुशिवादीनामालयं ऊँ भूः, ऊँ भुवः, ऊँ स्वः इत्यादि प्रणवत्रयसंयोगात् त्रिपदागायत्रीत्युच्यते। यथा त्रिकालसंध्या, त्रयः प्राणायामस्तथैव आचमनमपि त्रयं तथैव ब्राह्मणः क्षत्रियः वैश्यादिवर्णाः अपि त्रय एव।

परं तत्त्वेन निर्मिता चतुर्विंशत्यक्षरा गायत्र्याः आद्यन्ते प्रणवं संयोज्य द्विजः अहर्निशं जपेत्। गायत्री एव पुरातनी ब्रह्मविद्या। विष्णु–शिव–शक्ति–सूर्य–गणपत्यादिषु मन्त्रेषु गायत्रीमन्त्रः उत्तमः।

यथा पारसमणेः स्पर्शेन अयोऽपि सुवर्णमयो भवति तथैव गायत्र्युपासकः ब्राह्मण एव वेदे द्विजाति तेन अभिहितः। सूर्य चन्द्रग्रहणे चास्य मन्त्रस्य जपेन ब्राह्मणः ब्रह्ममयः भवेत्।

हंसः इत्यत्र हकारोर्ध्वस्थितः बिन्दुञ्च गायत्र्याः उत्पतिः तथा च गायत्र्यां सर्वं कोटिकोटिशः ब्रह्माण्डम्। यथा कमलदले जलविन्दोः स्थितिर्न भवति तथैव गायत्रीस्मरणात् पापस्यस्थितिर्न भवति। सृष्ट्यारम्भे अपूर्वध्वनिः अजायत, स तु ओंम् रुपिणः आसीत् अत एवोमिति अक्षरब्रह्मः परमात्मनः स्वरूपं सृष्टेः आदिकारणं च स्वीक्रियते। ओंकारः एव प्रणवः। निराकारोपासनायामस्यैवाक्षरब्रह्मण इत्यस्य स्मरणं ध्यानं च क्रियते।

**व्याहृतिवर्णनम्–**

व्याहृतिशब्दस्यार्थः– व्या - व्यापकम्
ह - हरणात्मकम्
ति - तापः

अर्थात् या तापं हरति सर्वत्र व्यापकाचास्ति सा व्याहृति। भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम् एताः व्याहृतयः त्रिविधपापक्षालने समर्थाः। एताः सप्तव्याहृतयः वस्तुतः मन्त्रस्वरूपंभूताः सन्ति।

आसु प्रथमाः तिस्रः व्याहृतयः, भूः, भुवः, स्वरिति महाव्याहृतिपदेनाभिधीयन्ते। अनेके विद्वांसः अस्या विविधरूपेण व्याख्यानं विहितक्तः।

| भूः | भुवः | स्वः |
|---|---|---|
| रक्षकः | दुःखनाशकः | सुखस्वरूपः |
| पृथ्वी | अन्तरिक्षकः | स्वर्गः |
| प्राणः | अपानः | व्यानम् |
| सत् | चित् | आनन्दः |
| अग्निः | वायुः | आदित्यः |
| वाणी | मनः | प्राणाः |
| सत्ता | चिन्तनम् | प्रकाशकः |
| ऋक् | यजुः | सामः |

एते मन्त्राः जीवनस्योन्नतौ सारभूताः तत्वत्रयप्रकाशिकाश्च सन्ति। ब्रह्माण्डेऽस्मिन् यत्किंचित् दृश्यते तत्सर्वं त्रिमहाव्याहृतिष्वन्तर्भूताः एव सन्ति

मन्त्रोत्पत्तिः–

ब्रह्मणे प्रथमं प्रणवस्य बोधः अभवत्। तस्मात् प्रणवात् सप्तव्याहृतीनां प्रादुर्भावः एषु त्रिव्याहृतीनां महाव्याहृतिसंज्ञा।

ब्रह्मणा चतुर्विंशत्यक्षरा गायत्री मन्त्रस्य रचनाकृता। एतेभ्यः चतुर्विंशत्यक्षरेभ्यः चतुर्वेदान्तम् उत्पत्तिः, वेदेभ्यश्च विविधाः विद्याः शास्त्राणाञ्चोत्पत्तिरिति। अतएव गायत्री वेदानां मातेति उच्यते। आदिममन्त्रत्वात् "गायत्रीमन्त्रं मन्त्रराजः महामन्त्रेत्यादि शब्दैः सम्बोध्यते।"

गायत्री ब्रह्मस्वरूपा, अतएव जगज्जननी वर्तते। अतएव सर्वैः त्रिसन्ध्यं जपादिकं क्रियते।

**पौराणिकं कथानकं** सृष्ट्यादौ ब्रह्मणः शरीरात् तरुण्याः प्रादुर्भाव अभवत्। तस्याः साहाय्येन सृष्टेः निर्माणम् अजायत। अतएव सा ब्रह्मणः पत्नी सावित्रीरुपेण प्रतिष्ठिता अभवत्।

जडसृष्टि सञ्चालक शक्तिः प्रकृतिः, चैतन्यसृष्टिजनयित्रीशक्तिः सावित्रीत्युच्यते। गायत्री सावित्र्याः एव स्वरूपं मन्यते।

ऋग्वेदे वारमेकम्, यजुर्वेद चतुर्वारं सामवेदे वारमेकं गायत्रीमन्त्रस्योल्लेखो दृश्यते।

गायत्रीमन्त्रस्य सारभूतमर्थमेव वक्तुं शक्यते यत् ईश्वरः सर्वव्यापकः सर्वेषां स्वामी, सर्वेषुश्रेष्ठः वयं तस्य दिव्य तैजसतत्वं आह्वयामः यो नः धियो सन्मार्गं प्रचोदयात्।

**जपेनलाभः–**

सांसारिक वैभवानां प्राप्तिः ब्रह्मज्ञानस्य लाभश्चानेन भवति। ज्ञाताज्ञात अनेकविधदोषाः जीवने भवन्ति। सर्वविधदोषाणां निराकरणं गायत्रीजापेन क्रियते दैनन्दिनदोषाणां निःसारणार्थं प्रतिदिनं गायत्रीमन्त्रस्य जपः कर्त्तव्यः। ब्रह्महत्यादि दोषाणां निराकरणमनेन सम्भवति। अस्याः जापेन सद्बुद्धेः विकासः श्रद्धाः भक्ति आस्थायुक्ताश्च जनाः भवन्ति शाश्वतपरमपदं चानायासेन लभन्ते, सर्वविध दुःखदैन्यादीः भूतप्रेतादिविध्नानां, क्रूरग्रहाणां निराकरणं चानया सद्योः भवति। अनेन जापेन नापमृत्युः, अपितु चतुर्वर्गफलप्राप्तिश्च लभ्यते।

## मातृकाविवरणम्

श्रीरघुनाथमन्दिरपुस्तकाल्यात् संगृहीता

क. मातृकासंख्या – २६६८ क

ग्रन्थनामः – गायत्रीमन्त्रविवृतिः, विषय – भक्तिशास्त्रम्

ग्रन्थकारः – शिवरामस्वामिनः, उपाध्याय कुलोत्पन्नः

पत्राणि – ३, श्रेणयः, अक्षराणि – २३/७६

लिपिः – शारदा

आधारः – कर्गजपत्रम्

सम्पूर्णा कृतिरियं पण्डितशिवरामस्य काश्मीरिकोपाध्यायवंशसूतस्य यः श्रीमहाराजरणजित्सिंहस्य काश्मीरराज्यारम्भे जीवितवान्।

ख. जम्मूस्थ श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठ, पुस्तकालयात् संगृहीतः।

मातृका संख्या - १२९,

मातृकानाम - गायत्रीमन्त्रविवृतिः

ग्रन्थकारः - शिवरामोपाध्याय (शिवरामस्वामी)

विषयः - भक्तिशास्त्रम्, विवरणम्, पूर्णम्,

स्थितिः - समीचीना, लिपिकालः - संवत् ५०२०

पत्रसंख्या - २७ प्रतिपृष्ठं पंक्तिसंख्या - १८

प्रतिपंक्ति वर्णसंख्या - १८, लिपिः - शारदा, आधारः - कर्गजपत्रम्

## उपसंहारः

प्रस्तुतग्रन्थस्य लेखकेन गायत्रीमन्त्रविवृत्ति नामकेग्रन्थे गायत्रीमन्त्रः चतुर्वेदमयत्वेन साधितः। गायत्रीप्रकृति प्रणवश्च पुरुषरुपेणात्र स्वीकृतः। प्रणवः शिवस्वरूपः गायत्री च शक्तिरुपा वर्तते। अतः गायत्रीमन्त्रं शिवशक्तिरूपां जगत् च शिवशक्तिमयमिति अत्र साधितम्।

गायत्रीशब्दस्य व्याख्यानं, गायत्रीमन्त्राक्षराणां विवेचनं, गायत्रीमन्त्रस्य माहत्म्यादिवर्णनं सम्यक्प्रतिपादितमत्र। सविता, सरस्वती वा अस्यैव वाचकः। अत्रोक्तं सरस्तुल्यः कश्चिदेकार्णवः तन्मयीसरस्वती अनेकस्याः एव परमैश्वर्याः पराशक्तिः पश्यन्ती मध्यमा वैखरी ज्ञानेच्छाक्रिया गायत्री सावित्री सरस्वतीत्यादि नामाभेदो नतु वस्तुभेदः।

गायत्रीमन्त्रे त्रिविधशक्तिनां निवासः, इच्छा, क्रिया ज्ञानरुपेणास्ति अष्टत्रिंशत् कलारुपेण शब्दब्रह्म अत्र विराजते।

**ओंकारो ब्रह्म इत्युक्तः उकारो विष्णुरुच्यते।**
**मकरो रुद्र आदित्य अर्द्धचन्द्रस्तु ईश्वरः।**
**विन्दुः सदाशिवो देवः प्रणवः पञ्चदैवतः।**
**प्रणवे पञ्चदेवानां स्थापना कृता वर्तते।**

अनेन अस्य मन्त्रस्य चमत्कारिणी शक्तिः वर्णध्वनिना स्फुटिता सन् समस्तान् दुरिवान् अघादीन् चापाकरोति।

अस्मिन् श्लोके प्रणवे स्थितानां देवानां ब्रह्मरुपेण वर्णनं दृश्यते। यतो ह्यत्रोक्तम्–

**सद्यो जातः अकारस्तु उकारो नामदेवकः।**
**अधोरस्तु मकारो वै तत्पुरुषोऽर्धचन्द्रकः।।**
**विन्दुरीशान इत्युक्तः पंचब्रह्मत्मकः स्थितः।**

अस्य मन्त्रशक्ति विषयेऽत्रोक्तम् – शक्तिशर्क्तिमतोरभेदः सर्वदा दृश्यते। अत्र परात्मनः शिवस्य एषा गायत्री पराशक्ति एव। यथा आलोकः दीपस्य शक्तिः किरणैः भास्करस्य शक्तेर्बोधो भवति तथैव शिवस्य शक्ति गायत्रीति वक्तुं शक्यते अत्र शक्तिस्वरूपा गायत्री भगवतः शिवस्य प्रकाशेन भासते। गायत्रीमन्त्रः वर्णात्मकोऽस्ति। वर्णाः वाग्रुपिणः वाणी च शिवरूपिणी भवति। उक्तमत्र – तन्मत्रवीर्यं भगवान् शब्दराशिः परः प्रभुः विद्याशरीरमन्त्रेति शिवसूत्रं प्रदर्शितम्।

सर्वविधमन्त्रेषु उत्तमः अघमर्षकः एतादृक् न कश्चिदन्यो मन्त्रः, अत एव गीतायामुक्तं भगवता श्रीकृष्णेन **गायत्री च्छन्दसामहमिति।**

---

१. च्छविपदार्थाभासंरूपा पराशक्ति सा–इति ख पुस्तके पाठः
२. स्फुरतात् परोजिसिमें त्वत्प्रतिपादपदे–इति ख पुस्तके पाठः।
३. ख. षट्त्रिंशतत्वात्मक इति पाठः।
४. ख. शरीरैः–इति पाठः।
५. ख एव इति अधिकः पाठः।
६. ख. निवृति–इति पाठः।
७. ख. वेदकत्वलक्ष्य लक्ष्यणैनैकांशेनवेद्यं सर्वमधिष्ठायात्मकपरतन्त्रं – इति पाठः।
८. ख. सैषा– इति पाठः।
९. ख. परमेष्ठिने – इति पाठः।
१०. ख. भाव – इति पाठः।
११. ख. रुच्यते – इति पाठः।
१२. ख. शुद्धमृतमयात्मैवैत्यत्राभिसन्धिः – इतिं पाठः।
१३. ख. इति वाग्वै – इति नास्ति।
१४. ख. इदं सर्वं – इति नास्ति।
१५. ख. अस्यार्थः। यत्किंच वाग्रूपं कथामात्रं सैवगायत्री इत्यधिकः पाठः।
१६. ख. निरुतरुस्वस्य – इति पाठः।
१७. ख. रुणजगसमूलपकिति – इति पाठः।
१८. ख. तकार इति पांठः।
१९. ख. हकार – इति नास्ति।
२०. ख. चिञ्वेय – इति पाठः।
२१. ख. कस्या – इत्यधिक पाठः।

२२. ख. कस्मात् - इति पाठः।
२३. ख. गायते - इति पाठः।
२४. ख. गे - इति पाठः।
२५. ख. गायत्रि - इति पाठः।
२६. ख. अनुग्रह - इति पाठः।
२७. ख. स्संशयाय - इति पाठः।
२८. ख. यद्वा - इति नास्ति।
२९. ख. सर्वमिदं - इति नास्ति।
३०. खं. श्रीभगवान् - इति नास्ति।
३१. ख. तघटनाया - इत्यधिकः पाठः।
३२. ख. सारं - इति अधिकः पाठः।
३३. ख. भगवती - इति अधिकः पाठः।
३४. ख. सेव्यत - इति पाठः।
३५. ख. शक्ति - इति नास्ति।
३६. ख. ज्योतिरिति - इति पाठः।
३७. ख. विष्णुरित्युच्यते - इति पाठः।
३८. ख. रुद्रदैवत्येऽर्द्धचन्द्रस्तदीश्वरः - इति पाठः।
३९. ख. रूप - इति नास्ति।
४०. ख. इति - इत्यधिकः पाठः।
४१. ख. ईश्वरः - इति पाठः।
४२. ख. स्वात्मस्वरूपा - इति पाठः।
४३. यद्यपि प्राकृतान्ततत् सवितुरित्यादिकाश्रुतिः - इति नास्ति।
४४. प्रकर्षस्य - इत्यधिकः पाठः।
४५. विश्वोत्तीर्णत्वमुपदिशति - इत्यधिकः पाठः
४६. पादोऽस्य - इत्यधिकः पाठः।
४७. ख. उतैनं - इति नास्ति।
४८. ख. च पद प्रक्रान्त - इति पाठः।
४९. ख. तेन सर्वव्यापकं - इति पाठः।
५०. ख. नस्पन्दोनापि वै ध्यानं न स्फुरन्नापि कापि हि।
५१. ख. प्रकाशपराभव इति पाठः
५२. ख. श्रुत्योऽपि इति पाठः
५३. ख. दक्षा कस्मैं इति पाठः
५४. ख. संसारिभूमिकायामपि - इति पाठः।
५५. ख. विनीत्य - इति पाठः।
५६. ख. एवाधिगन्तव्येमिति - पाठः।
५७. ख. नेहास्यवितन्यते।
५८. ख. इति श्रुतेः - अधिकः पाठः।
५९. ख. शिथिलश्चेत् न विमर्शात्मक - इति पाठः।

६०. ख. धियोयोन इति नास्ति।

६१. ख. प्रचोदकत्वानुपपत्तेः – इति पाठः।

६२. ख. विशिष्टः – इति पाठः।

६३. ख. प्रसंगात् – इति पाठः।

६४. ख. स्वभावपरामर्शस्य – इति पाठः।

६५. ख. विमर्शविन्दुरन्यथा – इति पाठः।

६६. ख. स्सर्वकर्मा – इत्यधिकः पाठः।

६७. ख. करोमिति – पाठः।

६८. सावित्रमैश्वस् इति ख पुस्तके पाठः।

६९. व्युत्थान इति शब्दः वि+अक्त+या गतौ प्रापणेवा+ल्युट्+यु+अण् गत्यर्थो वा प्राप्त्यर्थो वा।

# गायत्रीमन्त्रविवृतिः

**सम्पादकः डा॰ रमेशचन्द्रहोता**

**श्रीगणेशायनमः**

**प्राणत्राणपराभिधेयसुमिलद्‌गायत्रनाम्नात्मन-**
**स्त्रैलोक्यत्रिमरुत्रिवेदचरणेष्वेकांशभावस्थिता।**
**हृद्‌व्योमस्थितचिद्‌विच्छविपदासद्रूपरूपापरा[१]**
**शक्तिः सा स्फुरतात्[२] परेरजसि मे लब्धप्रतिष्ठापदे।। १।।**

**ईश्वरप्रत्यभिज्ञार्थं शिवस्यायं समुद्यमः**
**गायत्रीमन्त्रविवृतिद्वारा स्वस्य परस्य च।। २।।**

**गायत्री प्रकृतिर्ज्ञेया प्रणवः पुरुषः स्मृतः**
**ताभ्यामुभयसंयोगाज्जगत्सर्वं प्रवर्तते।। ३।।**

**चतुर्वेदमयीदेवी गायत्री शक्तिरुच्यते।**
**प्रणवः शिव इत्येवं शिवशक्तिमयं जगत्।। ४।।**

इह हि परमेश्वरः षट्‌त्रिंशत्तत्त्वात्मकवैचित्र्यस्वातन्त्र्यस्वभावः[३] पूर्णसंविद्रूपो विश्वोत्तीर्णो विश्वमयशरीरः[४] परास्पन्दविमर्शप्रकाशादिशब्दवाच्योऽनन्तशक्तिचक्र-चुम्बितकायः सर्वत्र सदा स्वस्वरूपे[५] वर्तत इति शैवागमरहस्यम्। सर्वोऽयं प्रपंचोऽस्य शक्तिः **शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तुमहेश्वर** इति हि शास्त्रम्। मुख्या तु शक्तिरस्यैकैव श्रीपराशब्दवाच्या अभिहितेयमाचार्याभिनवगुप्तपादैः ययेदं शिवा-दिकीटान्तमविकल्पसंविन्मात्ररूपतया विभर्ति च पश्यति च भासयति च। परमेश्वरः सास्य श्रीपराशक्तिरिति परमेश्वरस्वरूपप्रकाशप्रत्यवमर्शमात्ररूपा विमर्शशक्ति-शब्दवाच्या स्वस्वरूपशिवस्वभावाभिन्ना तद्‌व्यतिरिक्तविषयान्तरनिवृत्तगतिः[६] परानन्दात्मकस्वातन्त्र्यशक्त्यपरपर्याया शिवादिक्षित्यन्तव्यापिनी देशकालाकारानवच्छिन्ना जीवकलामधिष्ठायात्मपरतन्त्रं[७] कृत्वा वर्तमाना शिवकलेत्युच्यते, तदुक्तमाचा-र्योत्पलदेवपादैः। **चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदितेति** तथा **सा स्फुरन्ती महासत्ता देशकालविशेषिणी सैव[८] सारतया प्रोक्ता हृदयं परमेष्ठिन[९]** इति। महाप्रकाशस्य या स्वात्मनि विश्रान्तिरहमितिरूपा सा परा यत्रेदन्तायाः कल्पनमारोपणमपसारणं वा नास्ति विमर्शक्रियापराशक्तिरिति सिद्धान्तः। इयमेव परादेवी यदा इदं भाग[१०] महम्भावग्रस्ततया कल्पयति, प्ररोहरहितत्वा-दहमिदमित्युल्लिखति। तदा पश्यन्ती वाक् सदाशिवादिभूमिकाज्ञानशक्तिरित्युच्यते।[११]

यदा त्वियमेव विमर्शशक्तिरहंभावादिदन्तामपकर्षति। अहमिदं जानामि करोमीति। संकल्परूपेणावतरति तदा मध्यमा वागिच्छाशक्तिरित्युच्यते। द्वैधीभावस्त्वस्या अन्यत्र दर्शितः। मध्यमारूपं भगवतैव दर्शितम् हेतुः सङ्कल्पजालस्य **मनोऽधिष्ठायिनी शुभा इच्छेति परमाशक्तिरुन्मिमीलत्ततः परमिति।** इयमेव घनतामापन्ना वैखरीरूपेण पुरुषप्राणपरिस्पन्दाधीनाभिव्यक्तिकत्वात् स्थूला सती क्रियाशक्तिरिति गीयते। यदुक्तं **ततो वागिति विख्याता शक्तिः शब्दमयी पुरा प्रादुरासीज्जगन्माता वेदमाता सरस्वतीति।** इयमेव शब्दब्रह्मेत्युच्यते। अस्यां दशायामहं शिरश्चालयामि चलामीत्यादिविमर्शप्राधान्यमियति सर्वत्र विमर्शरूपतैवानुगतेति विमर्शरूपसर्ववाग्रूप इति निश्चयः। यद्यपीयं पारमेश्वरी पराशक्तिर्गेहघटादिपर्यन्तं प्रसरणशीलतया वर्त्तते तथापि कृत्स्नप्रपञ्चस्य सामान्यसंवित्प्रकाशमन्तरेणानुपपन्नस्वरूपस्य प्रत्यवमर्शिन्याः सत्या अस्याः सर्वदा शिवस्वभावाभिन्नत्वं न व्याहन्यते। यदाह भट्टनारायणः प्रसरद्बिन्दुनादाय शुद्धामृतमयात्मने इति। प्रसरद्बिन्दुनादोऽपि परमेश्वरः शुद्धामृतमयात्मै-वेत्यत्राभिसन्धिः[१२]। इयं परा वागेव श्रुतौ गायत्रीत्युच्यते। तथा च श्रुतिः। **गायत्री वा इदं सर्वं यदिदं किंचेति वाग्वै[१३] गायत्री वाग्वा इदं सर्वं[१४] वाचारम्भणं विकारो** नामधेयं शब्दे सर्वं प्रतिष्ठितमित्यादि तथा च सिद्धसूत्रं गायत्रीकथा इति[१५] वन्नविहीन निरुतुरुरवसु।[१६] रुजगसमूलप्रकृतिगायत्रीनेक[१७] [१८]उकारहकारविकसरुवन्नचित्र[१९] चिंजेय[२०] विचित्र इति [२१]कस्मासंकेतप्रकाशे[२२] गायति[२३] च त्रायते च या सा गायत्री कै गै[२४] शब्दे इति धात्वनुसाराद्गायति[२५] वैखरीरूपेण शब्दोभवति त्रायते[२६] च विश्ववैचित्र्यपरामर्शकारिस्वभावरूप सामान्यसंवित्प्रकाशस्वरूपप्रत्यवमर्शेन रक्षति। स्वात्मसमावेशसंपत्तिं करोतीति गायत्री। अथ च गायन्तं शब्दयन्तं सर्वात्मकोऽहमेवास्मीति अहमिति सहजस्वभावां पूर्णाहन्तां विमृशन्तं त्रायते अहं भावातिरिक्ताऽत्यन्ता [२७]सत्तुल्यदेवतान्तरविषयो[२८]पासनकलङ्कसम्पर्कात्[२९] पालयति।[३०] प्रतिष्ठितसहजानन्द-संविदात्मविमर्शं हित्वा उपासनान्तरं कलङ्क एव यदुक्तं महागुरुभिः **उक्तित्वात्म[३१] समाधानं ये ध्यायन्त्यस्य देवताः भिक्षन्ते भूरिवित्तास्ते भिक्षित्वापि बुभुक्षिता** इति। अनुशक्तिः[३२] पारमेश्वरी स्वात्मविमर्शं बोधयित्वा न पुनः संसारकूपे[३३] पातयति। अतो गायन्तं त्रायत इति। यद्वा[३४] **गायन्तं त्रायते यस्मात्, गायत्री त्वं ततः स्मृतेति** पद्धति नीत्या गायन्तं सर्वमिद[३५] पदार्थजातं परमेश्वरपरावाक्- शक्तिविजृम्भितं स एव सर्वप्रमातॄणां स्वात्मा अतः किमन्यच्चिन्तयेत्यादि विमृशन्तं प्रमातारं त्रायत इति। तथा च स्वपरामर्शकारिभक्तजनरक्षणमुपदिशति। श्री भगवान्-[३६]

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्।।** इति।।

परमार्थस्तु गायान् प्राणान् त्रायत इति प्राणधारिणी प्राणस्वरूपा शक्तिर्गायत्रीत्यर्थः।

प्रथमं प्राणरूपेणावतरति या सैव गायत्री वा प्राक् संवित्प्राणे परिणता प्राणा वै गायास्तांस्तत्रैतस्माद्गायत्रीति श्रुतेः।[३७] तत्र त्रायते पालयतीत्यर्थः। इयमेव सावित्रीत्युच्यते। सवितुर्बोधादित्यस्येयं सावित्री सूते परा हन्ता चमत्कार[३८] ग्राह्यग्राहकनानावैचित्र्यभिन्नं विश्वं सुवति प्रेरयति सत्पथेऽसत्पथेवेति सविता बोधादित्यः तस्य सम्बन्धिनी सरस्वतीति च। सुष्ठ्वतीव सरति प्रसरति शब्दमयश्रुतिस्मृत्यादिरूपेण नानात्वं गच्छतीति सरस्वती। अथ च सरस्तुल्यश्चिदेकार्णवस्तन्मयी सरस्वतीत्येकस्या एव पारमेश्वर्याः पराशक्तेः पश्यन्ती मध्यमा वैखरी ज्ञानेच्छाक्रिया[३९] गायत्री सावित्री सरस्वतीत्यादिनामभेदो न वस्तुभेदः। चितः स्तुतावत्यस्माभिर्नामभेदेन स्वातन्त्र्य-तश्चमत्कारप्रकाशपरामर्शरूपितः **स्फुरतान्मे परः शम्भुर्दृश्याकारेण संवृत**[४०] इत्यस्मिन् पद्ये निर्वृतीच्छाज्ञानक्रिया वर्णिताः। तदेवं शक्तित्वे सति शक्तिमन्तमियमपेक्षत इत्यभिन्नमातृकात्मकः शब्दराशिरूपक्रियाशक्ति[४१] प्रधान ईश्वरः शक्तिमान् ओंकारप्रणवशब्दवाच्योऽयमेव वर्णितः।

श्रीभागवतपुराणे–

**स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।**
**मनोमयं सूक्ष्ममुपेत्य रूपं मात्रास्वरो वर्णयति स्थविष्ठ इति।।**

अस्यार्थस्तु तत्रैवावधार्यः ग्रन्थगौरवभयादिह न तन्यते। ओंकारस्वरूपं पुनर्बहुधा दर्शितं रहस्यशास्त्रेषु–

**इच्छा क्रिया तथा ज्ञानं ब्राह्मी रौद्री च वैष्णवी।**
**त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति।।**[४२]

**शब्दब्रह्ममयं देवमष्टत्रिंशत्कलान्वितम्।**
**पंचमात्रासमारूढं कारणं परमं शिवम्।।**

**अकारो ब्रह्म इत्युक्त उकारो विष्णुरुच्यते।**[४३]
**मकारो रुद्र आदित्य**[४४] **अर्द्धचन्द्रस्तु ईश्वरः।।**

**बिन्दुः सदाशिवो देवः प्रणवः पंचदैवतः।**
**सद्योजातः अकारस्तु उकारो वामदेवकः।।**

**अघोरस्तु मकारो वै तत्पुरुषोऽर्धचन्द्रकः।**
**विन्दुरीशान इत्युक्तः पंचब्रह्मात्मकः स्थित इत्यादि।।**

**अकारो विराट उकारो हिरण्यगर्भः मकारोऽव्यक्तमेष।**

त्रिमात्रस्त्रिपाद ओंकार परापररूपं[४५] इति वेदान्तः।।

निर्णीता वाक्स्वरूपेयं गायत्री वेदमातृका।
अधुनैतदुपासायां कारणं वर्ण्यते पुनः।।

शक्तिशक्तिमतोर्यस्मादभेदः सर्वदा स्थितः।
अतस्तद्धर्मधर्मित्वं पराशक्तिपरात्मनोः।।[४६]

यथालोकेन दीपस्य किरणैर्भास्करस्य वा।
जायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये।
इति न्यायाच्छिवज्ञानं शक्तौ च प्रतिभासते।
तच्छक्त्युपासना कार्या गायत्री शक्तिरुच्यते।।

मन्त्रस्वरूपा गायत्री मन्त्रवर्णात्मिका अपि।
वर्णा वाग्रूपिणः सर्वे वाणी च शिवरूपिणी।।

तन्मन्त्रवीर्यं भगवान् शब्दराशिः परः प्रभुः।
विद्याशरीरमन्त्रेति शिवसूत्रं प्रदर्शितम्।।

न गायत्र्याः परं जप्यं गायत्रीच्छन्दसामहम्।
इत्यादिवचनैर्ज्ञेयो गायत्रीमन्त्र उतमः।।[४७]

स्वात्मस्वरूप[४८] गायत्रीमविमृश्य जडो जनः।
य आस्ते क्षुद्रदेवादिमन्त्रजापी पशुर्हि सः।।

यद्यपि व्याकृता तत्सवितुरित्यादिकाश्रुतिः।[४९]
आचार्यैः पदवाक्यार्थज्ञानादिकारणैः परैः।।

तथाप्यात्मप्रबोधार्थं शिवरामेण सूरिणा।
प्रकटीक्रियते शैवशास्त्रयुक्त्यातिरम्यया।।

अथ मन्त्रो व्याख्यायते।
ओ३म् भूर्भुवः स्वःतत्सवितुर्वरेण्यं भर्गो देवस्य
धीमहि। धियो यो नः प्रचोदयात्।

ओम् व्याख्यातस्वरूपः परमेश्वरोऽयमेव सदा सर्वस्य स्वात्मभूतत्वाद्ध्यान-विषयो येन, कदाचित्पशुप्रमातुः स्वतन्त्रशक्तिपातः[५०] प्रक्षेपणपरः शिवो भावापादकं समावेशात्मकसत्पथा प्रचोदनं करिष्यति स्वच्छन्द इति त्रिकादिदर्शनरहस्यं पादत्रयेण

श्रोत्रियजनश्रुतिपथपथिकीकुर्वाणः प्रथमं सप्तव्याहृतिभिः श्रीपरमेश्वरस्य विश्वमय-शरीरत्वमुपदिशति ओ३म् भूर्भुवः स्वरिति भूः भुवः स्वरिति लोकत्रयम् ओ३म् स्वस्तीत्यन्वयः यत्तावदियं प्रसिद्धा लोकत्रयकल्पना तदोङ्कारः श्रीपरमेश्वर एव भवतीत्यर्थः। उपलक्षणमेतद्यत्किंचिच्चतुर्दशभुवनात्मकं विराट्शरीरं यावच्छिवादिक्षित्यन्तं तत्त्वजातमपि तत्सर्वस्वतन्त्र ईश्वर एव एतदेव त्वस्य स्वातन्त्र्यं यत्तां तामवस्थामापन्नोऽपि परस्मात् पूर्णस्वरूपान्न चलति कदाचित् सर्वस्य प्रपञ्चजातस्य प्रकाशैकमग्नस्य प्रकाशमयत्वमेव प्रकाशमानत्वात्।

अथैतद्भिन्नस्य सत्तैव न स्यात् कथं विश्वं प्रकाशेत तस्माच्चैतन्यप्रकाशसत्तया विश्वस्फूर्तिः। तथा च श्रुत्युपदेशः–

**तमेव भान्तमनुभाति सर्वं।**
**तस्य भासा सर्वमिदं विभातीति।।**

नन्वोङ्कारस्य परमेश्वरशब्दाभिधेयत्वे किं प्रमाणमिति चेत् वक्तुः स्मृतये यथा **ओमित्येकाक्षरं ब्रह्म ब्राह्ममक्षरमोमिति प्रणवः सर्ववेदेषु तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः** तस्य वाचकः प्रणवो यस्येत्यादयः। ओंकारस्याभ्युप-गमोऽर्थः ओमेवं परमे मते इति वचनात् अभ्युपगमोप्यस्तीति सद्रूपोऽङ्गीकारः परमेश्वरोऽपि सद्रूप एव तेन ओंकारलक्षणप्रणवास्तिरूपयोर्घटकलशादिवत् पर्यायत्वं व्यस्तव्याहृतिपक्षेप्ययमेवार्थः। सर्वस्येश्वरत्वे रहस्यशास्त्रयुक्तिश्च ज्ञानक्रिये एव सदा शिवेश्वरौ ते एव सामान्यतः प्ररूढे विद्याकाले विशेषतः प्ररूढे बुद्धीन्द्रियाणि-कर्मेन्द्रियाणीति सर्वं शिवमयमेव सर्वं खल्विदं ब्रह्मेति श्रुतेश्च ओंकार एव जीवनं विन्दुनादौ हि शक्त्याद्यण्डचतुष्टये इत्यर्थबोधको लिप्यः प्रणवः परमाक्षर इति नीत्या ग्रामीणलिप्यार्थानुसारेण सर्वमिदं विन्दुनादात्मकमिति बोधयन् विश्वस्य शिवमयत्वं बोधयतीति सच्छास्त्ररहस्यम्।

प्रत्यभिज्ञा च ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतमिति।[५१] तत्सवितु-रित्यादिना तत्सर्वसामान्यं महासत्तारूपं तदा सर्वनामत्वात्प्रसिद्धं च स्वप्रकाशत्वेन परप्रकाशलक्षणसाध्यत्वाभावात् अहं रूपस्य सर्वजनसिद्धत्वात् सर्वैरनुभूत[५२] च उतैन[५३] विश्वाभूतानीतिश्रुतेः सर्वकारणत्वेन पूर्वप्रक्रान्त[५४] च तत्सर्वव्यापक[५५] भर्गः प्रकाशं संवित्पूर्णस्वातन्त्र्यस्वभावं तत्सवितुर्बोधादित्यस्वभावशब्दवाचस्य[५६] संवन्धि धीमहीत्यन्वयः। तत्रेह स्वभाव एव परमोपादेयः स्वभावलाभार्थमेव ब्रह्मदीक्षासंस्कारः पशुप्रमातुः गायत्रीमन्त्रजपोऽप्येतत् प्रयोजन एव, स एव सर्वोपादेयत्वाद्ध्यानविषयः स्वभाव एव परमोपादेय इति ह्याचार्याः यथा स्वभावस्य स्वरूपं तथा तन्त्रसाराख्ये ग्रन्थे विज्ञानभेदप्रकाशने प्रथमाह्निके वितत्य निर्णीतमाचार्याभिनवगुप्तपादैरिति नास्माभिः

प्रकाश्यते न तु स्वभावः सविताकथं येन सवितृस्वभावयोरैक्यं प्रत्यवमृष्यते उच्यते स्वोऽसाधारणः भावः सत्ता चेष्टा वा आत्मा वा परस्य रूपः स्वभावः सर्वस्य स्वरूपं सत्ताज्ञानं क्रिया वा अहमस्मि जानामि करोमीत्यादि हि प्रत्यवमृष्यते सर्वेण अतः स्वभावः संविदेव प्रकाशो वा सविता हि किरणप्रसरणकारी पदार्थः स एष वै सविता य एष तपतीतिश्रुतेः तपति जानाति करोति च यस्य ज्ञानमयं तप इति श्रुतेः तेन ज्ञानादिलक्षणतापकारी ज्ञानादिमयः सविता स्वभावोऽपि ज्ञानमेवेत्यनयोर्न विशेषः। तस्मात् सुष्ठूक्तं सवितुर्बोधादित्यस्य स्वभावशब्दवाच्यस्येति धीमहीति ध्यायेम स्वाभेदेन विमृशामः सत्येन चित्रयाम इति यावत्। एतादृशस्य सर्वव्यापकस्थानं तस्यापरिच्छन्न-स्याऽभेदविमर्श एव ध्यानम् नत्वव्यापकविनाशि परिच्छिन्नपंचवक्त्रादिकल्पनम्–

उक्तं हि विज्ञानभैरवे–

**ध्यानं या निश्चला बुद्धिर्निराकारा निराश्रया।**
**न तु ध्यानं शरीरादिमुखहस्तादिकल्पना।।**

वसिष्ठोऽपि–

**सोऽहं चिन्मात्रमेवेति चित्रञ्च ध्यानमुच्यते।**
**ध्यानस्याविस्मृतिः सम्यक् समाधिरभिधीयते।।**

न तु ध्यानं प्रसिद्धमेव तत्कथमुक्तं न तु पञ्चवक्त्रादि कल्पनमिति चेत् सत्यम्। परंत्वक्षैरारोपितत्वान्न परमार्थसदेतत् तथाचोक्तं श्रीभागवतपुराणे–

**एतद्रूपं भगवतः स्वरूपस्य चिदात्मनः।**
**मायागुणैर्विरचितं महदादिभिरात्मनि।**
**यथा नभसि मेघौघोरेण्डर्क्षपार्थिवोऽनिले**
**तथा द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिरिति।।**

ननु ध्यानकल्पना तन्त्रेषु भगवतैव कृता तत्किं नांगीक्रियते। गुरुभिरुन्मत्तैरिवेति चेत् तदेतत्तावदास्ताम् महाप्रकाशशरीरः सर्वव्यापको महेश्वर इति सर्वस्याऽविवादस्तावद् नह्येतादृशस्य ध्यानं सम्भवति। तस्य सकलकल्पनायाः सारत्वात् सर्वव्यापकसंविदि ध्यानासंभवात् ध्यानस्य मनोगोचरत्वेन ब्रह्मणो मनोवागविषयत्वात् यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेतिश्रुतेः। तर्हि ध्यानस्याविषयत्वेनागमाप्रामाण्यशंका गतेति चेत् मैवं वोचः ध्यानं हि पशुप्रमातृविषयं भगवता कृतं तेन नानाप्रमाण्यशंका वेदस्य यत् उक्तस्वरूपे भगवति परमशिवे पशुप्रमातुश्चितं न विशति कंचुकत्रितयादि विद्धत्वे नाप्रवुद्धत्वात्। ध्यानादिकं पशुविषयमेव दर्शितं विज्ञानभैरवादौ यत्किंचित्सकलरूपं

भैरवस्य प्रकीर्तितम्।

**तदसारतया देवि विज्ञेयं शक्रजालवत्।**

**मायातुल्योपमं चैव गन्धर्वनगरभ्रमम्।।**

ध्यानार्थं श्रान्तबुद्धीनां क्रियाडम्बरवर्तिनामिति भैरवस्तोत्रस्यापि ध्यानं पूजादिकं जप्यं होमादिस्त्याग एवं च आह्वानकरणं स्थानं आरुरुक्षुषुः दर्शयेत् 'गीतासु च'–

**आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते** इति। भागवतेऽपि यावन्न जायेत परावरे विश्वेश्वरे द्रष्टरि भक्तियोगः। तावत् स्थवीयः पुरुषस्वरूपं क्रियावसाने पुरुषं स्मरेत् इति। यदि पुनः कदाचित् प्रमातुः परमेश्वरप्रसादात् प्रबुद्धता परमशिवभूरभ्येति हृदयगोचरं तदा न किंचित्प्रयोजनं सत्कारवस्तुविषयध्यानपूजाद्याटोपेन तथा च पशुप्रमातारं प्रत्येव वसिष्ठोपदेशः यावदप्रतिबुद्धिस्त्वमनात्मज्ञप्तयास्थितः तावच्चतुर्भुजाकार-देवसंज्ञापरो भवति सति पुनर्द्वैतप्रत्ययलक्षणाबोधख्याति विगलने सामरस्ये आरूढस्य योगिनो ध्यानानुपयोगित्वं निष्कण्टकम्। एवच्च हृदि निधाय स्वयं परमेश्वरेण गणप्रमुख भृंगिरिति संहितायां निरूपितम्। सदेवाग्रे इदमासीदिति वेदेषु निश्चयः।

**न स्पन्दो नापि वै ध्यानं न स्फुरन्नपि कापि हि** इति उपक्रम्य

**सर्वं सूते जगद्यस्माद्विज्ञाना त्रायते जगत्।**

**सवितुश्चैव या शक्तिः सावित्रीति च तां जगुरिति** वोधार्क शक्तिं सावित्रीं मध्येऽभिधाय ध्यातुः या साधकैः सा हि गायत्रीस्तत् स्वरूपिणी सामरस्ये महादेविध्यानसंज्ञेविलीयते स्त्रीत्वशंका न कार्याचेत्यादिनोपसहृतम् गायत्री प्रणवैक्यं गायत्रीनिर्णये तत एवान्वेष्यम् ननु वोधादित्यस्य संबन्धि प्रकाशं धीमहीति न मनसि रोहति न हि बोधप्रकाशयोः कश्चिद्भेदः आदित्यप्रभयोरिवेति चेत् सत्यम्। उपचारेण निर्देशोयम् ओउम् नमः। परमाकाशशायिने परमात्मने राहोः शिर इत्यादिवत्। नन्वस्तु पारमेश्वर ईदृशः स्वभावः किमस्माकं तद्विमर्शेन न हि देवदत्तस्य सत्तया परोपकृतिरहितया यज्ञदत्तस्योपयोग इत्याशंक्याह वरेण्यमिति। वरेण्यं वरणीयं कांक्षणीयं निष्कारणमेव स्वरूपनिर्मलीभावापादनेन स्पृहणीयमिति यावत् इति पुष्कल एवैतद्विमर्शः। न हि स्वात्मम्भूत प्रकाशपरामर्शं[७] विस्मृतिर्युक्तोन्मत्तमृते श्रुतयो[८] हि परामर्शमेवोपदिशन्ति तमेवैकं जानथ आत्मनमन्या वाचो विमुञ्चथ अमृतत्वस्यैष सेतुः आनन्दमयः परमात्मा स्वभावात्मा ज्ञातव्यः। तमेव विदित्वाऽमृतत्वमेतीत्यादयः। स्पृहणीयत्वमेव मनसि निधायाह भट्टनारायणः भगवन्भवभावत्कं भावं भावयितुं रुचिः पुनर्भवभयोच्छेददताकस्मैन[९] रोचते इति। महेश्वरस्य षष्ठीविशेषणेन ध्येयत्वं दृढयति देवस्येतिदिवुक्रीड़ादौ तेन सर्वोत्तीर्णत्वं सर्वकर्तृत्वं सर्वप्रकाशकत्वं सर्वस्तुत्वं सर्वगतत्व

सूचितं सृष्ट्याः पाण्डवोक्तायाः क्रीडायाः प्रथमं निर्देशान्मुख्यतया सच्छास्त्र प्रसिद्धारोहावरोहदोलाकेलिना विश्ववैचित्र्य क्रीडाशीलस्येत्यर्थ एकाकी नः रमाम्यहमितिन्यायात्। यथा चेयं दोलाकेलिस्तथास्तव चिन्तामणि विवृतौ क्षेमराजपादैर्दर्शितस्तृतीयश्लोके। अथ मन्त्रार्थः—

**यतो वा इमानि भूतानि जायंते येन जातानि**
**जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म।**
**सृष्टिसंहारकर्त्तारं विलयस्थितिकारकम्**
**अनुग्रहकरं देवं प्रणतार्तिविनाशनमिति।।**

वेदतन्त्रोक्तरीत्या सदा पञ्चविधकृत्यकारित्वं चिदात्मनो भगवतः प्रसिद्धमेव। यथा भगवान्—

शुद्धाशुद्धाध्वस्फारणक्रमेण स्वरूपविकासरूपाणि सृष्ट्यादीनि करोति। तथा संकुचितचित्छक्तितया संस्कारिभूमिकायामपि[६०] पंचकृत्यानि विधत्ते एतच्च यथा तथेश्वरप्रत्यभिज्ञादौ वितन्य[६१] निर्णीतं तत एवावगन्तव्यमिति[६२] नेहायस्यते[६३] व्याख्यामात्र प्रवृत्तैरस्माभिः। जीवदशायामपि पंचविधकृत्यकारित्वमात्मीयमनवरतमेतन्मन्त्रार्थचिन्तनेन परिशील्यमानं सन् माहेश्वर्यमेवोन्मीलयेद्भक्तिभाजाम्। तरति शोकमात्मवित्, ब्रह्मविद्ब्रह्मैव भवति।[६४] तस्माच्छोभनयुक्तं वरेण्यं भर्गो देवस्य धीमहीति। ननु य आत्मनि तिष्ठन्नात्मान मन्तरोऽयम यति यमात्मानं वेदयस्यात्माशरीरं एष ते आत्मान्तर्याम्यमृत इति वाजसनेय ब्राह्मणोपनिषदन्तर्गतेऽन्तर्यामि—ब्रह्मणे अन्तर्यामी उपास्यो दृश्यते। ईश्वरो वा आत्मा वा, सर्वत्र **ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनऽतिष्ठति, तमेव शरणं गच्छे**त्यादि श्रुतिस्मृति प्रसिद्धो ध्येयो दृश्यते ननु भर्गः पठित इति कोऽयमपूर्वः प्रकाशो नामेत्याशङ्क्य एकस्या एव संविदोऽन्तर्यामीश्वरो नारायणः प्रकाशो बोधः स्वभाव इत्यादि तत्तन्नामान्तरमेवेति प्रचोदकत्वमप्यस्यैवेत्यभिसन्ध्याह धियो योनः प्रचोदयादिति। यद्वा यदि प्रकाशरूप एव गायत्र्याख्यः परमेश्वरः स्वभावस्तर्हि जाड्यमस्यायावाह्य जडप्रकाशवदित्याशंकां शिथिलयंश्चेतनत्वमुपदिशति[६५] धियो योन इति।[६६] अनेन तृतीयपादेन विमर्शात्मक एव प्रकाशतयोपोद्बलितः अन्यथा निर्विमर्शस्य जडतारूषितस्थायीप्रचोदकत्वानुपपत्तिः[६७] चेतनस्य विप्रष्टुः[६८] सर्वान्तःकरण-नियामकत्वसंभवात्[६९] यत् प्रत्यभिज्ञाग्रन्थो जरीजृंभते स्वभावमवभासस्य[७०] विमर्शं विदुरप्रकाशोऽर्थोपरार्थोविस्फटिकादिजडोपम इति।[७१] अथवा यदि भर्ग एव ध्येयः सवितृसंबन्धी तर्हि बहिस्थः सूर्यमण्डलमुपास्यमिति कस्यचिदाशंका स्यात्तन्नि-वारणायादित्यस्वरूपं निरूपयति धियो यो न इति। यः संवित्स्वरूपः श्रुतिस्मृति-विषयेऽन्तर्यामि शब्दवाच्यः चिन्ताद्वयान्ते व्यापकतयाऽनुभूयमानोऽनुसंधाता विशुद्ध

चिन्मात्रस्वरूपो जडानां प्रकाशानामपि प्रकाशकः सर्वकारणमात्मा अयमेवोन्मेष इत्युच्यते।

रहस्यशास्त्रेषु यद्धारणाभ्यासवशाद्बिन्दुनादाद्यावस्था– योगिनां प्रादुर्भवन्ति नः अस्माकं रुद्रक्षेत्रज्ञप्रमातृणां धियोऽन्तःकरणानि प्रचोदयात्प्रचोदको भवति। तत्तकर्त्तव्याध्यवसायकारयितृत्वेन सर्वेन्द्रियप्रेरको भवतीत्यर्थः। अयमभिप्रायः सर्वेन्द्रियप्रवर्तको विमर्शप्राणईश्वरः[७२] सर्वज्ञः उपास्यो ब्राह्मणैर्नतु निर्विमर्शं शान्तमचेतनं ब्रह्म ध्येयमिति निष्क्रियब्रह्मवादिमतनिरास इति। अयमेवोपदिष्टः **स्पन्दे एकचिन्ता प्रसक्तस्य यतः स्यादपरोददः। उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेदिति** स्मृत्यन्नविदेपि

**जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः।**
**केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमिति।।**[७३]

वसिष्ठमहर्षिणापि पदे पदे निर्णीतः।

**देशाद् देशान्तरं दूरं प्राप्तायास्संविदः क्षणात्।**
**यद्रूपममलं मध्ये तद्रूपं परमात्मनः।**

देशादेकविषयाद्देशान्तरं मध्येचिन्ताद्वयमध्ये अमलमनुसन्धेयचिन्ताद्वय-व्यापकमनुसंधातृरूपं विशुद्धचिन्मात्रमित्यर्थः। भागवतपुराणेप्येतन्मन्त्रार्थो दर्शितः। य इह वा स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणानतात्मनः स्वयमात्मान्तर्यामी प्रचोदयतीति मयापि स्तुतिद्वारा ध्यायेम स्पृहणीयं तत्तेजः सावित्रमैश्वर्यं[७४] सदाशिवादिकीटान्त विश्वबुद्धिप्रचोदकमिति सर्वेश्वरः प्रकाशात्मा सर्वव्यापी सर्वस्तुत्यः सर्वगतः सर्वान्तर्यामी सर्वोपास्यः परमेश्वर एवेति मन्त्रपदानां लक्ष्यार्थः। वाच्यार्थस्तु निगदव्याख्यातोपि प्रतिपद व्याख्यातः। परो राजसीति मन्त्रस्तु वृहदारण्यकोपनिषद्गायत्री– 'ब्राह्मणे विवृतत्वान्न निर्णीतः। अस्मदभिमते जपादौ तस्यानावर्तनीयत्व, दर्शनाच्च मन्देहान्प्रति जलाञ्जलि–प्रक्षेपसमय पवनस्य पाठो दृश्यते। यत्र कैश्चिदुक्तं जप्ये तु त्रिपदा ज्ञेयाद्यर्चने तु चतुष्पदेति स्मृत्युक्तत्वाद्गायत्र्याः पूजनविषये चतुष्पदीत्वं चतुर्थः शब्दस्तु परोरंजस्य **सावितितत्रेभ्रान्ताः** पादत्रयेणैव षड्भिर्वर्णैः पादगणना-च्चतुष्पदीत्वसिद्धेः स्कन्दपुराणादिषु तथैवोक्तत्वादित्यलम्। ये सदैवैतत्परिशीलयन्ति ते स्वरूपविकासमयं विश्वं जानाना जीवन्मुक्ता इत्याम्नाताः **येतुना तथाते शुद्धप्रायाः** कर्मस्वनधिकृताः एतादृश विश्वोर्त्तीर्ण विश्वमयमहेश्वर प्रत्यभिज्ञार्थमेव चतुर्वेद विषय उपदेशः तपोयज्ञदानादीनां कर्मणां तत्र तत्रास्मिन्नेवार्पणे भगवतोपदिष्टम् **यत्करोषि यदनासि मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जित** इत्यादिना आसनप्राणायामादि क्लेशकल्पनाप्येतत्प्रत्यभिज्ञानं फलैव वेदयज्ञयोगादीनामीश्वरप्रत्यभिज्ञा फलत्वं। भागवते

दर्शितम्–

**वासुदेवपरा वेदा वासुदेवपरा मखाः वासुदेवपरा योगा वासुदेवपराक्रिया** इत्यादि तस्मात्सर्वप्रमातृ- भिरेतन्मन्त्रार्थचिन्तनदार्हो न सदैव स्वात्मविमर्शः कार्यः येन कदाचिन्मन्त्रमूर्तिः स्वतन्त्रचैतन्यमहेश्वरो भगवानुन्मेषभट्टारकः स्वभावप्राप्त्युपाये समावेशात्मनिसत्पथ एवं चोदनं करिष्यतीति प्रमाता शिव एवं भवेत् तदुक्तं विज्ञानभैरवे–

**सर्वज्ञः सर्वकर्त्ता च व्यापकः परमेश्वरः स एवाहं शैवधर्म इति दार्ढ्यां छिद्भ्श्वो भवेत्** दृश्यतासंवित्सार किंजल्क चर्वर्ण चंचरीकेण भट्टनारायणे-नापित्युत्थानदशायां[७५] समावेश प्रार्थना कृता यथा **गायत्र्या गीयते यस्य धियां तेजः प्रचोदकम् चोदयेदपि कश्चिन्नः स धियः सत्पथे प्रभुरिति** औपनिषद-पक्षेणायप्यर्थोदर्शयिष्यते। सविता आदित्य उद्गीथः प्रणव इति यावत् अथ खलु य उद्गीथः। स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ एव आदित्य उद्गीथ एष प्रणव इत्येवं ह्योहेतिश्रुतेः। सवित्रुद्गीथभक्त्यंशः प्रणवः बह्वृचीनां शास्त्राङ्गभूतं ओंकारः स एव उद्गातृणामुद्गीथः शास्त्रस्तोत्रोपकारकतया भिन्नस्थानवर्त्तिनोरोङ्कारव्यक्त्योरभेदः। सवितुः, प्राणादित्यस्य प्रणवशरीरस्य भर्गो ज्योतिश्चक्षुषि स्थितं प्रसिद्धस्य जगदवभासकत्वेन विभाव्यमानस्यादित्यस्य ज्योतिर्वाह्ये आदित्यमण्डलात्मानिश्चितं च धीमहि ब्रह्मतेजः स्वरूपेण य आदित्ये तिष्ठन् य श्चक्षुषि तिष्ठन्नित्यादिश्रुतेः। अकारोकारोमकाराख्येषु प्रणवावयवेषु एकैकं त्रिकं त्रिकमवयवशो विभज्य ओंकाराङ्गिनः ओमिति स्त्रीपुंनपुंसक लिङ्गवतो अग्निवाय्वादित्यब्रह्मरुद्रविष्णुगार्हपत्यदक्षिणाग्नि आवहनीयऋग्यजुः साम भूर्भुवः स्वर्भूतं भव्यं भविष्य प्राणोग्नि मूर्यः अन्नमापश्चन्द्रमाबुद्धिर्मनोहङ्कारः प्राणोपानोव्यान इत्यादि प्रणवात्मकं सर्वं ध्यायामः। प्राणादित्यात्मन एव ग्रहणवैशिष्ट्य ध्येयमित्यभिप्रायः। प्रणवात्मकमपि प्राणादित्ये सर्वस्य जगत ओतप्रोततयावस्थानाद्वयमेव प्रणवात्मनो नास्मत्तोन्यत्किंचिदिति धीमहित्यस्याशयः। तथा च मैत्रोपनिषत् यद्ब्रह्मतज्ज्योतिः यज्ज्योतिः स आदित्यः सर्व एष ओमित्येतदात्मा भवत् स त्रेधात्मानं व्यकुरुत ओमिति तिस्रो मात्राः एताभिः सर्वमोतं प्रोतं च एषोस्मि इत्येव ध्यायत आत्मानं युंजीतेति अर्थ भर्ग य इति **योरुवाश्रमुष्मिन्नादित्ये निरितूः तारकोलिणिवा** एष भर्गाख्योभाभिर्गतिरस्य ही ति भर्ग इत्यादिनामनु। प्रतीकार्थोस्यामेव षष्ठे प्रपाठके वितत्य निर्धारित इति तत्रैवावधार्य इति। अन्यविवरणकारैरपि एतां च संध्यादौ जपतोऽनाद्यविद्यावासनो पप्लवोपप्लुत-देहेन्द्रियाद्युपद्रवविद्रवे सत्यखिलप्रपञ्चविहीनचैतन्यसुखभावपरंब्रह्मलयलक्षण मोक्षप्राप्तिर्भवति। कामिनां च स्वर्गादिप्राप्तिरित्युक्तमिति शिवम्। परतत्वात्परैरविना

गायत्रीमन्त्र उत्तमेव्याख्या विदुषाशिवेनरम्याशंकर चोदनवशीकृते नेयम्। समाप्तेयं गायत्रीमन्त्रविवृतिः स्मृतिः।

श्रीशिवस्वामिनः–

उपाध्यायकुलोत्पन्नशिवरामप्रकाशिता।
श्रीविद्यातुष्टये भूयाद्गायत्रीविवृतिः परा।
यद्यपीयं मया दृष्टास्वात्मानन्दविवृद्धये।
अन्योपि कश्चित्तदपि कृतकृत्योऽनया भवेत्।।
शास्त्रान्तरैकरसिकैः क्षन्तव्यं विबुधैः परैः।
स्वविनोदं विरचयन्ननिन्द्यो यज्जनो भुवि।।

# मञ्जुनाथग्रन्थावलिः प्रकाशिता

-गोविन्दचन्द्रपाण्डेयः

**लोकप्रियसाहित्यग्रन्थमाला ८-मञ्जुनाथग्रन्थावलिः-प्रथमभागे प्रथमः खण्डः-जयपुरवैभवम्, गोविन्दवैभवम्, पृ.सं. ४५० मू.३२५/- प्रथमभागे द्वितीयखण्डः साहित्यवैभवम् पृ.सं. ५१०, मू. ३५५/- द्वयोः प्रधानसम्पादकः- प्रो.राधावल्लभत्रिपाठी, सम्पादकौ-देवर्षिकलानाथशास्त्री, डॉ. रमाकान्तपाण्डेयः, प्रका. राष्ट्रियसंस्कृतसंस्थानम्, ५६-५७, इंस्टीट्यूशनल एरिया, जनकपुरी, नई दिल्ली-५८**

अधुनातन-संस्कृत-साहित्यस्य युगपुरुषत्वेन विख्यातानां, संस्कृतकाव्ये, गद्ये च नूतनविधानामुद्भावनं विधाय युगान्तरमुपस्थापितवतां, संस्कृतपत्रकारतायाः पुरोधसां कविशिरोमणिभट्टश्रीमथुरानाथशास्त्रिणां (''मञ्जुनाथो''पनाम बिभ्रतां) (१८८९-१९६४) साहित्यसृष्टिर्विपुला, विविधा चाऽस्तीति विदन्त्येव साहित्यमर्मज्ञाः। ''साहित्यवैभवम्'', ''जयपुरवैभवम्'', ''गोविन्दवैभवम्'' इत्यादयो नूतनच्छन्दोबद्धाः काव्यग्रन्थाः, आदर्शरमणीत्यादय उपन्यासाः, ''किन्तोः कुटिलता'' इत्यादयो ललितनिबन्धाः, रसगङ्गाधर-कादम्बरीप्रभृतीनां श्रेण्यग्रन्थानां ससम्पादनं टीकालेखनम्, गाथासप्तशत्याः, हिन्दीकवेर्विहारिणः सप्तशत्याश्च समच्छन्दोनुवादः इत्येवंविधा विपुला साहित्यसृष्टिर्विंश्यां शताब्द्यां देशख्याताऽभूत्। अत एव साहित्येतिहासकारैराधुनिकसंस्कृतसाहित्यस्य युगविभाजनं कुर्वाणैः १९३०-१९६० मध्यगं युगं ''भट्टयुग'' त्वेनाऽभिहितमभूत् (पं. बलदेवोपाध्यायायस्य प्रधानसम्पादकत्वे प्रकाशितस्य संस्कृत वाङ्मय का बृहत् इतिहास इत्यस्य सप्तमे खण्डे)।

इदमपि साहित्यविमर्शकैः स्पष्टीकृतमभवद् यत् ''गजल'' गीतेरवतारणा उर्दूत इतरभाषासु सर्वप्रथमं संस्कृतेऽभूदित्याश्चर्यकरम्, तदनु हिन्दी-गुजराती-सिंधीप्रभृतिष्वन्यासु भारतीयभाषास्वभूत्, सेयमवतारणा च भट्टमञ्जुनाथेनाक्रियत। हिन्द्यां ललितनिबन्धाः परस्तात्प्रासरन् तत्पूर्वं संस्कृते ललितनिबन्धा व्यलेख्यन्त, भट्टपादास्तेषां स्रष्टारोऽभूवन्। भट्टमहोदयानां सेयं विविधा विपुला च साहित्यसृष्टिः प्रायो लक्षपृष्ठात्मिकाऽस्ति। एतस्या भूयानंशो दुर्लभः सञ्जातोऽभूत्, कतिपया रचनास्त्वलभ्या एव सञ्जाताः, तदानीन्तनानां पत्रिकाणामलभ्यत्वात्। एवंविधानां साहित्यसर्जकाणां समग्रं साहित्यं पाठकैरुपलभ्येत,

इत्येतदर्थं दिल्लीस्थेन राष्ट्रियसंस्कृतसंस्थानेनैतादृशानां विदुषां ग्रन्थावलीप्रकाशनस्योपक्रमः प्रारब्ध इति ज्ञात्वा प्रसीदेयुर्विद्वद्वर्याः। सर्वप्रथमं भट्टमथुरानाथशास्त्रिमञ्जुनाथानां ग्रन्थावलिरस्मिन् क्रमे प्रारभ्यते यस्याः खण्डद्वयं सपद्येव प्रकाशमागतम्।

सेयं ग्रन्थावलिर्विभिन्नेषु भागेषु च प्रकाश्येतेति योजना। एतस्यां प्रथमभागस्य काव्यकृतिस्वरूपस्येदं खण्डद्वयम्। प्रथमे खण्डे जयपुरवैभवं, गोविन्दवैभवं चेति काव्यद्वयं, कतिपयमुक्तकरचनाः, समस्यापूर्तयश्च समाविष्टाः। द्वितीये खण्डे ''साहित्यवैभवम्'' प्रकाशितम्। जयपुरवैभवे जयपुरनगरस्येतिहासः, राज्यवंशवर्णनं, नगरस्य स्थानोद्यानादीनां, विशिष्टव्यक्तीनां, विदुषां च वर्णनं कवित्त-दोहा-चौपाईप्रभृतिषु हिन्दीच्छन्दःसु, संस्कृतच्छन्दःसु च निबद्धमस्ति। गोविन्दवैभवे भक्तिकविता संस्कृत-हिन्दी-उर्दूप्रभृतिच्छन्दःसु गीतिषु चास्ति। द्वितीये भागे साहित्यवैभवाख्ये काव्यसंग्रहे नवरस-ऋतुवर्णन-नवयुगवर्णन-नायक-नायिकाभेदप्रभृतिविषयिणी कविता, अन्योक्तयः, बिहारिप्रभृतीनां कवीनां समच्छन्दोऽनुवादास्तु सन्त्येव, समस्तेषु संस्कृतच्छन्दःसु काव्यरचना, समस्तहिन्दीच्छन्दःसु संस्कृतकाव्यं, समस्तासु उर्दूगीतिविधासु लक्षणपरिचायनपूर्वकं संस्कृतकाव्यरचना इत्यादिकं विशिष्य चमत्कारजनकं प्रभावि च कृतिजातमपि समाविष्टम्।

एवंविधैरेव नवप्रयोगैस्तदानीं नवजागरणमानायितमभूत्, तत एव च भट्टमथुरानाथानां युगप्रवर्तकत्वमभिहितमितिहासकारैः। ग्रन्थावल्या अस्याः प्रधानसम्पादकास्तु राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिवर्याः प्रो.राधावल्लभत्रिपाठिनः सन्ति येषामयं प्रकल्पोऽस्ति, सम्पादकत्वं भट्टमथुरानाथशास्त्रितनूजैः स्वयं सुप्रथितविद्वद्वर्यैः कविभिः समालोचकैश्च राष्ट्रपतिसम्मानितैः देवर्षिकलानाथशास्त्रिभिरनुष्ठितम्। तैः स्वकीयभूमिकायां नवयुगीनसंस्कृतसाहित्यं परिचायितमस्ति, तदनु तैर्ग्रन्थकारस्य भट्टमथुरानाथ-शास्त्रिणो जीवनं कृतित्वं च सविस्तरं विवृतमस्ति। सहायकेन सम्पादकेन डॉ. रमाकान्तपाण्डेयेन भट्टपादानां टीकाग्रन्थानां परिचयः प्रत्तः। पूर्वमपि श्रीमता पाण्डेयेन भट्टमहोदयानां गद्यसाहित्यं सुसम्पाद्य प्रकाशितमभवत्।

ग्रन्थावल्यामस्यां मूलकाव्यैः सह स्वयं कविना निबद्धा संस्कृतटीकाऽपि मुद्रिता यया काव्यबोधने सुमहत् साहाय्यमनुष्ठीयते। हिन्दीटीकादिकं, यत् गीताप्रेसादिभिः पूर्वप्रकाशितेष्वेषु काव्येष्वभूत्, नाऽत्र समाविष्टम्, मूलग्रन्थकारस्य समस्तं साहित्यं सुरक्षिततया पाठकेभ्यः प्राप्येतेति सर्वात्मना प्रशंसनीयोऽयं प्रकल्पः। एतत्कृते संस्थानकुलपतयः सम्पादकद्वयं सर्वे च सहयोगिनः सुभृशं साधुवादार्हाः। नूनं संस्कृतपाठक-समुदाय एतेषां कार्तज्ञ्यं सर्वदा बिभृयादित्यत्र नास्ति संशीतिलेशः।

## नवीनः काव्यशास्त्रग्रन्थः

**देवर्षि-कलानाथशास्त्री**

**अभिनवकाव्यालङ्कारसूत्रम्- प्रणेता प्रो. राधावल्लभत्रिपाठी, सम्पादको हिन्दी व्याख्याकारश्च- डॉ. रामकान्तपाण्डेयः, प्रकाशकः-जगदीशसंस्कृतपुस्त-कालयः, झालानियों का रास्ता, जयपुरम्, पृ.सं. ३९०, मू. ५००रु.**

काव्यशास्त्र-लक्षणग्रन्थानामनेकशताब्दीव्यापीतिहासः सुविदितः। एतेषु लक्षणग्रन्थेषु भामह-वामनानन्दवर्धन-मम्मट-विश्वनाथ-जगन्नाथादिप्रणीतेषु बहवः कारिका- वृत्तिशैलीबद्धाः सन्ति, बहवः सूत्र-विवृतिबद्धाः सन्तीत्यपि सुविदितम् लक्षणग्रन्थानामयं क्रमोऽद्यावधि प्रचलतीतीदमपि गतेषु दिनेषु बहूनामाधुनिकसाहित्यविदुषां नूतनैर्लक्षणग्रन्थैः प्रत्यायितम्। एषु अभिराजराजेन्द्रमिश्राणामभिराजयशोभूषणं प्रकाशितचरं यद् 'भारत्या' मपि समीक्षितचरमिति स्मरेयुः पाठकवर्याः। अन्येऽपि तादृशलक्षणग्रन्था भारत्यां चर्चितचराः। क्रममिमं परिचालयन् राष्ट्रियसंस्कृतसंस्थानकुलपतीनां डॉ. राधावल्लभत्रिपाठिनां काव्यशास्त्रीयो लक्षणग्रन्थः प्रकाशितोऽभूत्तस्य हिन्दी-अनुवादसहितं नूतनं संस्करणं जयपुरात् प्रकाशितमिति सूचयन्तः प्रमोदामहे।

"अभिनवकाव्यालङ्कारसूत्रम्" इति शीर्षकं वहन्नयं ग्रन्थोऽधिकरणत्रये विभक्तोऽस्ति। अयं सूत्र-विवृतिशैल्यां निबद्धोऽस्ति। प्रथमं तु "लोकानुकीर्तनं काव्यम्" "स च लोकस्त्रिविधः" आधिभौतिकः, आधिदैविकः, आध्यात्मिकश्च। इत्यादिशैल्यां सूत्राणि दत्तानि, तदनन्तरं तेषां विवृतिः पद्ये गद्ये च सोदाहरणा प्रदत्ताऽस्ति। प्रथमेऽधिकरणे काव्यलक्षणं, द्वितीयेऽलङ्कारनिरूपणं तृतीये च काव्यभेदानां निरूपणमस्ति। मध्ये मध्ये कारिकारूपेण अनुष्टुप्सु आर्यावृत्तानुहारिषु छन्दोबद्धेषु पद्येष्वपि च कुत्रचित् स्वाभिप्रायो लक्षणकारेण प्रकटीकृतोऽस्ति।

सर्वत्र लक्षणकारस्य क्रान्तिकारिणी, 'नवा' दृष्टिः, नूतनोऽभिगमः, अभिनवतायां च प्रवृत्तिर्दृग्गोचरीभवति, प्राचां खण्डनमपि वृत्तौ कृतं दृश्यते। यथा तृतीयेऽधिकरणे काव्यभेदेषु महाकाव्य-खण्डकाव्य-गीत-मुक्तक-छन्दोमुक्त-कविता-गजल-समस्या-निबन्ध-कथोपन्यास-संस्मरण-रेखाचित्र-जीवनचरितात्मकथा-यात्रावृत-रूपकेति भेदा लक्षिताः। अत्र नूतनानि प्रस्थानानि समावेशितानीति स्पष्टमेव। "दिङ्मात्रमिदं

निरूपितमिति" पर्यन्ते कथयतो लक्षणकारस्य तात्पर्यमिदमेव प्रतीयते यत्प्राप्ते समये स रूपकस्य सर्वान् नूत्नान् भेदान् विवेचयिष्यति। ग्रन्थेऽस्मिंस्तु रूपकस्य भेदद्वयमेव सूचितम्। एकाङ्कं नाटकं च। एकाङ्कं प्रसङ्गविशेष एव प्रस्तूयते, नाटके तु समग्रं जीवनमिति। यथासमयमग्रे (आगामिनि ग्रन्थे) लक्षणकारो रूपकाणामन्यानपि प्रकारान् सूचयेदिति सम्भवति यथा रेडियो रूपकं (यत् श्रव्यं भवति, नाटकस्य दृश्यकाव्यत्वे स्वीकृतेऽपि!) दूरदर्शनधारावाहिकम् (दृश्यश्रव्यम्), चलचित्रम् इत्यादीन्।

यथा लक्षणप्रस्तुतौ, भेदोपभेदपरिकल्पने च सर्वथा नूतना दृष्टिरेव ग्रन्थेऽस्मिन् परिलक्ष्यते, तथा उदाहरण-प्रस्तुतावपि नूतना दृश्यते। लेखकेन नूतनानामेव कवीनां डॉ. हर्षदेवमाधवसदृशानां, स्वस्य वोद्धरणान्युदाहरणरूपेण प्रस्तुतानि बहुषु स्थलेषु।

सर्वस्यापि ग्रन्थगतस्य वस्तुनो हिन्द्यामनुवादो डॉ. रमाकान्तपाण्डेयेन कृतोऽस्ति। अनेन ग्रन्थस्य सर्वग्राह्यत्वं संजातमस्तीति वर्धापयामो लेखकमनुवादकं च द्वावपि। हिन्दीव्याख्याया नाम "अभिनवदीपिके" त्यस्ति।

शीघ्रतायां मुद्रितमिदं संस्करणमिति यत्र कुत्रचिद् या अशुद्धयः प्रतीयन्ते ता मुद्रणाशुद्धयः स्युरिति सुशकमनुमातुम्। अग्रतरेषु संस्करणेषु तासां संशोधनं सम्पत्स्यत इति स्पष्टमेव।

